# आद्या-चतुश्शती

रचयिता

डॉ० आद्याप्रसादमिश्रः
पद्मश्री-सम्मानितः
प्राक्तनकुलपतिः, इलाहाबादविश्वविद्यालयस्य



अक्षयवट प्रकाशन
इलाहाबाद

ISBN 978-81-904891-0-2

**आद्या-चतुश्शती**

- रचयिता :
  डॉ० आद्याप्रसादमिश्रः
  

- प्रथमं संस्करणम् : २००७
- मूल्यम् : शतत्रयरूप्यकाणि (Rs. Three Hundred)
- प्रकाशक :
  अक्षयवट प्रकाशन
  २६, बलरामपुर हाउस
  इलाहाबाद-२११००२
- मुद्रक :
  दूबे प्रिन्टर्स एण्ड ग्राफिक्स
  ५० अ, बलरामपुर हाउस
  इलाहाबाद-२११००२

## समर्पणम्

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना।
तत्प्रेरिता कृतिरियं विनिवेद्यते हि
तस्मै च सर्वगुरवे परमेश्वराय॥

# किञ्चिद्वाचिकम्

निबन्ध इव कवितापि परेषां मनोमस्तिष्कहृदयैः सह सम्पर्कस्थापनस्य मनोरमं साधनमस्ति। परेषां वृत्तिभिः विचारैर्भावनाभिश्च सह सम्बन्धस्थापनस्य सुखदं साधनं कवितैव। कविताया गेयत्वं गद्यकाव्यापेक्षया तामधिकतरमेव प्रभविष्णुं प्रभावकारिणीं वा करोतीत्यत्र नैव संशयः। गेयत्वादेव कवितायाः नैकानि रुचिकराणि स्थलानि स्मृति- पटलेऽनायासमेवाङ्कितानि भवन्ति यानि एकान्तक्षणेषु उद्ध्रियमाणानि विशेषतयानन्दस्रोतांसि सिध्यन्ति। आन्तरिक आनन्द एव काव्यस्य परमं प्रयोजनमिति सर्वेषां काव्यसमीक्षकाणामभिमतम्। वाग्देवतावतारस्य मम्मटस्य 'सद्यः परनिर्वृतये' इत्युक्तिः अस्मिन् विषये सुविदिता।

आद्याचतुश्शतीति मदीया प्रस्तुतकृतिरेवंविधानां कवितानां सङ्ग्रहो यासु प्राचीनानां वैचारिकसांस्कृतिकपरम्पराणामभिव्यक्तिरनायासमेव सञ्जाता। एतत्कारणं मदीयेयं मान्यतास्ति यदेताः परम्पराः कस्यापि देशस्य समाजस्य वा दीर्घकालिकजीवने जातानामनुभवानां सहजाः परिणतयो भवन्ति। कालान्तरेषु जीवनस्य परिस्थितिषु परिवर्त्तितासु, प्राक्तनपरम्परास्वपि न्यूनाधिकरूपेण परिवर्तनं जायते। एवं सत्यपि एता न निरवशेषतया परिवर्तिता न वा सर्वथा विलुप्ता भवन्ति। यदि दीर्घान्तरालेऽज्ञानकारणात् एता देशस्य समाजस्य वा स्मृतिपटलात् विलुप्ता भवन्ति, तर्हि तस्याधःपतन- मनतिदीर्घावधावेव प्रारभते। यतो हि स्वेतिहासं विस्मृत्य कोऽपि देशः समाजो वा चिरकालं यावत् जीवितुं नैव शक्नोति। वस्तुतः प्राचीनपरम्पराणां विषये सत्यं त्वेदत् यद्दिव्यदृष्टिभिर्मनीषिमूर्धन्यैर्महर्षिभिरर्जितोऽध्यात्मज्ञानराशिस्तन्मूला तदनुप्राणिता चास्माकीना मानवीयमूल्योपेता संस्कृतिश्चैकमात्रमीदृशं वस्तु यदस्मान् भारतीयान् सर्वेभ्यो लोकेभ्यो विशिनष्टि। स्वजातीयस्मृतिपटलादेतस्य विलोपेऽस्मत्सविधे विशिष्टं किमवशिष्येद्येन वयं गर्वं गौरवं चानुभवेम।

अस्याः काव्यकृतेः कविता भिन्नभिन्नेषु कालेषु रचिताः। आसां सङ्कलनस्य समये तत्तद्विषयानुसारेण तासां स्थानं निर्धारितम्। यथा कालमधिकृत्य या दशाधिकाः कवितास्ता काले-काले तद्विषये उत्थितानां भावानां छन्दोबद्धानि रूपाणि। विषयस्यैक्येऽपि भावानामनैक्यम्, साम्यं तु तेषु प्रकामं भवेदेव। अतः सङ्कलनकाले तेषां कोऽपि क्रमः कथञ्चिन्निर्धारितस्तदनुसारेण च तासां स्थानं सुनिश्चितम्। इयमेव प्रक्रिया प्रायेणाखिले सङ्कलने स्वीकृतास्ति।

अस्ति किञ्चिद्वक्तव्यं मूलस्य राष्ट्रभाषानुवादविषये। संस्कृतभाषयाभिव्यक्तानां भावानां



तदल्पज्ञानवतामज्ञानवतां च कृते सरलतया ग्रहणं नैव सम्भवं, विशेषतः सूक्ष्मभावा-

भिव्यक्तिस्थलेषु। एवं सति भारतीयधर्मसंस्कृत्योरनुरागिणां कृते तदनर्घपरम्परा अप्रकटिता अप्रकाशिताश्चैव भवेयुः। अनिष्टमेतन्न भवेदिति हेतोर्हिन्दीभाषाया आश्रयो गृहीतो मूलस्यानुवादस्य कृते। संस्कृताज्ञानिनां तदल्पज्ञानिनां च कृतेऽनेन महत् सौकर्यं भवेन्मूलस्य भावग्रहणे। अपि च, स्वधर्मस्य स्वसंस्कृतेश्च परिचयप्राप्ताविदं वरदानं तेषां कृते। अनेन प्रकारेण स्वपूर्वजानामुपादेयविचाराणां क्रियाकलापानां च ज्ञानं भवेत्, येन प्रगतिं कर्तुमग्रेगन्तुं च प्रेरणा प्राप्स्यते।

अत्र तथ्यमेतदवश्यमेवावधेयं यद्देशस्य बुद्धिजीविभिर्मनीषिभिर्विचारकैश्च काले-काले एताः परम्पराः स्वसूक्ष्मेक्षिकायाः स्वानुसन्धानात्मकदृष्टेर्विषयाः करणीयाः। एतासां परम्पराणां प्राचीनविचाराणां चोपादेयतायामश्रद्धालूनां संशयात्मनां संशयान् शङ्का वा दूरीकर्तुं देशस्य प्रत्येकवर्गस्य विचारवद्भिर्मनीषिभिरूहापोहपूर्वकं ताः परम्पराः कृतपरिवर्तनैः सहा-वश्यम् तर्कोपेताः संगताश्चकरणीया येन संशयात्मनामपि कृते ता मान्या भवेयुः।

नैतत् सत्यं यन्नवीनासु परिवर्तितपरिस्थितिषु प्राचीनैस्तत्कालानुरूपैरेव विचारैः क्रियाकलापैश्च व्यक्तेः समाजस्य च जीवनयात्रा सफलतया निर्व्यूढा भवेत्। तदर्थं नवीनविचाराणां, तदनुरूपक्रियाकलापानां युक्तीनां च जीवने समन्वयः करणीय एव। किन्तु नवीनस्य समन्वयोऽयं केन सह स्यात्? निश्चितरूपेण प्राचीनपरम्पराभिरेव सह। अत एव प्रस्तुतकवितासु प्राचीननवीनयोः समन्वयः सामञ्जस्यं वा प्राप्स्यते, यद् व्यक्तेः समाजस्य च कृते उपादेयं उपयोगि च सिद्ध्येदित्यस्माकं विश्वासः। अनेन विश्वासेन सहैव कृतमाद्याचतुश्शतीति सङ्ग्रहं संस्कृतकाव्यानुरागिणां विशेषतश्च भारतस्य सनातनसंस्कृतिभक्तानां पुरतः प्रस्तुवन् अमन्दानन्दसन्दोहं परां सन्तुष्टिं चानुभवामि। एतन्मात्रं निवेदनीयमासीत्। इतोऽपरं न किञ्चिदवशिष्यते निवेदयितुमिति विरमाम्यहमस्माद्वचोव्यापारात्।

भृगुवासरः<br>
अक्षयतृतीया<br>
२०६४ वैक्रमाब्दः

आद्याप्रसादमिश्रः<br>
प्राक्तनकुलपतिः<br>
इलाहाबादविश्वविद्यालयस्य

# अनुक्रमः

●

# अभिवन्दनम्

निर्विघ्नसिद्धौ परमप्रवीणो, नारायणो वै ससरस्वतीकः।
मदीयवाण्या हि विकासहेतोः, कृपाकरो देवगणाधिपः स्यात्।।

वाग्देवता या कविकामधेनुः, शुक्लांशुका पाणिगृहीतवीणा।
फलस्य निर्धूतरजाः सवित्री, वन्द्या सदा सर्वहितैषिणी सा।।

यो व्युत्क्रमेणापि भजंश्च 'रामं', कालक्रमेणामरगायकोऽभूत्।
छन्दःप्रयोक्ता प्रथमश्च लोके, प्राचेतसं तं मनसा स्मरामि।।

# अभिवन्दना

जो कार्यों की निर्विघ्न सिद्धि में प्रवीण हैं, वे देव-गणों के स्वामी भगवान् नारायण भगवती सरस्वती के साथ मेरी वाणी के विकास-हेतु कृपालु हों।

जो वाग्देवता भगवती सरस्वती कवियों के लिये समस्त अभीष्टों को प्रदान करने वाली है, श्वेतवस्त्रधारिणी है, हाथ में वीणा धारण किये हुये है, समस्त अभीष्ट फल प्रस्तुत करने वाली, तथा निर्दोष-निर्विकार है, सर्व-हितैषिणी है, वह सदैव वन्दनीय है, पूज्य है।

जो 'राम' को उल्टा अर्थात् 'मरा-मरा' जपते हुये कालान्तर में श्रीराम-कथा के अमर गायक एवं लोक में प्रथम (आद्य) छन्दः-प्रयोक्ता हो गये, उन महाकवि वाल्मीकि को सर्वात्मना स्मरण करता हूँ।

रम्या रामकथा सुखेन रचिता वल्मीकजातेन या
मङ्गल्या मधुरा च या रसमयी छन्दःप्रयोगान्विता।
ईदृश्या कथया समस्तजनताचित्तस्य मोदावहः
वाल्मीकिः कविसम्प्रदायपरमो देयात् कवेः शेमुषीम्।।

वाग्विस्तरा यस्य बृहत्तरङ्गास्तत्त्वावबोधश्च तटः सुबेलः।
द्वैपायनो भारतकाव्यकारः, पुनात्वसौ व्यासपयोनिधिर्नः।।

यो वै कवीनां प्रथमाभिधेयः, यः कालिदासोऽद्भुतशब्दशिल्पी।
सृष्टेश्च दर्शी मनसश्च सूक्ष्मः, स्यात् प्रेरणास्रोत इतीह काङ्क्षा।।

अन्यांश्च सर्वान् हि रसादिसिद्धान्, महाकवीन्नौमि नतेन मूर्ध्ना।
मत्काव्यसिद्धौ हि सहायकाः स्युः, सारस्वतेभ्यः खलु याचना मे।।

भगवान् राम की जो रम्य पावन कथा वाल्मीकि के द्वारा सहज रूप से रची गई, और जो मङ्गलकारिणी एवं मधुर होने के साथ ही रसमयी और छन्दोमयी (पद्यात्मिका) है, ऐसी कथा से समस्त जनता के चित्त को आनन्द से भर देने वाले कवि सम्प्रदाय-शिरोमणि महर्षि वाल्मीकि मुझे कवि की प्रतिभा दें।

जिनका वाग्विस्तर ही विशाल तरङ्गें हैं, तत्त्वावबोध ही सुरम्य तट है, महाभारत के रचयिता वे कृष्णद्वैपायन व्यास-पयोनिधि हमें पवित्र करें।

जो कवियों में प्रथम-शीर्षस्थ-कहे जाते हैं, जो अद्भुत शब्द-शिल्पी हैं, जो बाह्य और मानसिक जगत् के सूक्ष्म द्रष्टा हैं, वे कविकुल-गुरु कालिदास मेरे प्रेरणा-स्रोत हों, इतनी भर लालसा है।

जो अन्य रस-सिद्ध भारवि, माघ, भवभूति इत्यादि महाकवि हुये हैं, उन्हें नत शिर से प्रणामाञ्जलि समर्पित करता हूँ। मेरी कविता की सिद्धि में वे सदैव सहायक हों, मेरी यह विनम्र अभ्यर्थना है उन सारस्वत-पुत्रों से।

## सत्यं परं धीमहि

कं ब्रह्मेति श्रुतेर्वाक्यात्तस्यास्तद्विषये मतम्।
स्फुटमेतद्यदानन्दः स्वरूपं ब्रह्मणः परम्।।

चिद्घनत्वाच्चिदानन्दस्तदेवास्तीति निश्चितम्।
पारमार्थ्येन सच्चास्तीत्यतस्तत् सच्चिदात्मकम्।।

एवं च सच्चिदानन्दस्वरूपं ब्रह्म प्रोच्यते।
'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन'।।

## परमसत्य का ध्यान

'कं ब्रह्म' इस श्रुति-वचन से ब्रह्म-विषयक उसका यह मत सुस्पष्ट है कि कं अर्थात् सुख या आनन्द उसका परमार्थ रूप है, वह आनन्द-स्वरूप है।

चिद्घन होने से वह चिदानन्द है, यह निश्चित है। परमार्थतः उसी की सत्ता है, अतः सच्चिदानन्द-स्वरूप वही परमार्थतः सत् है। शेष समस्त ब्रह्माण्ड उसी की सत्ता से सत् प्रतीत होता है। वस्तुतः तो उसकी सत्ता मायिक या प्रतीयमान ही है, पारमार्थिक नहीं।

इस प्रकार ब्रह्म 'सच्चिदानन्द' कहा जाता है। "ब्रह्म के 'आनन्द' स्वरूप को जानने वाला पुरुष कहीं भी और किसी से भी नहीं डरता।" ऐसा श्रुति का वचन है।

तदेवास्ति निराकारं निर्गुणं चापि निश्चितम्।
जगत्सृष्ट्यर्थमेवादौ मायायोपहितं भवेत्।।

मायायास्त्रिगुणत्वाच्च तस्याः स्वामित्वकारणात्।
तदेव सगुणं भूत्वा परमेश्वर-संज्ञकम्।।

स्वे महिम्नि स्थितत्वाद्यद् बृहत्त्वाद् 'ब्रह्म' उच्यते।
सृष्टेः पूर्वमृतं[1] तद्धि तस्यास्तद्गत्यपेक्षणात्।।

वह निर्गुण एवं निराकार है, यह भी सर्वथा सुनिश्चित है। जगत् की सृष्टि के लिये ही वह कल्प के आदि में अपनी त्रिगुणात्मिका माया से युक्त होता है।

ब्रह्म माया से उपहित होने पर, उसका स्वामी होने से ही 'परमेश्वर' कहा जाता है। माया के त्रिगणात्मिका होने से ही वह सगुण होता है। सच्चिदानन्द-मात्र ब्रह्म तो निर्गुण ही है।

अपनी महिमा में स्थित होने तथा बृहत् (विभु) होने के कारण जो परम तत्त्व 'ब्रह्म' कहा जाता है, वही सृष्टि होने के समय तदर्थ गतिशील होने के कारण 'ऋत' कहा जाता है। 'ऋत' स्पन्दनशील या गतिशील तत्त्व है।

१. (i) द्रष्टव्य कठ० II-२।२-हंसः शुचिसद् ....अब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।
(ii) 'ऋतमेकाक्षरं ब्रह्म' इति स्मृतेश्च।

'ऋ' गताविति धातोश्च [1]स्फुरद्ब्रह्म भवेदृतम्।
तेनैव यन्त्रितं सर्वं रवि-चन्द्र-जलादिकम्।।

ऋताख्यरूपेण हि सृष्टिकर्ता
सृष्टिं व्यवस्थापयितुं नियन्तुम्।
करोति यत्नं सुमहान्तमादौ
तेनैव साऽनन्तयुगं हि धार्यते।।

ऋतं यतः सृष्टिविधारकं परं
ततश्च तत् सत्य-सनातनो हि।
त्रैलोक्यधर्मः, परिपालनेऽस्य
त्रिलोकरक्षा न च तत्र संशयः।।

सृष्टि के लिये 'एकोऽहं बहु स्याम्'-इस प्रकार का ईक्षण या सङ्कल्प होते ही परमेश्वर—मायोपाधिक ब्रह्म—में गतिशीलता या स्फुरत्ता (स्पन्दनशीलता) आ जाती है। [गत्यर्थक 'ऋ' धातु से कर्ता-अर्थ में क्त प्रत्यय लगा है। इस प्रकार गतिशील या स्पन्दनशील तत्त्व ही 'ऋत' कहा जाता है। Will precedes motion अर्थात् गति से पूर्व उसका कारण ईक्षण या सङ्कल्प रहता है, यह आधुनिक विज्ञान भी मानता है।] उसी के द्वारा सूर्य, चन्द्र, अग्नि, वायु इत्यादि सारे तत्त्व नियन्त्रित हैं।

सृष्टिकर्ता परमेश्वर इसी 'ऋत' रूप से सारी सृष्टि को व्यवस्थित-नियमित करने के लिये कल्प के आदि में महान् प्रयत्न करते हैं। इसी के द्वारा सृष्टि अनन्त युगों तक धारण की जाती है।

चूँकि 'ऋत' सृष्टि को नियमन द्वारा धारण करने वाला ईश्वरीय तत्त्व है, इसलिये वह त्रिलोकी [सृष्टि] का सनातन सत्य धर्म है जिसके परिपालन-अनुसरण से ही त्रिलोकी की रक्षा सम्भव है। इसमें तनिक भी संशय नहीं है।

---

१. स्फुरत् (√स्फुर सञ्चलने दीप्तौ च + शतृ) गतिमत् सञ्चलनशीलमित्यर्थः।

## ऋतम्

(१)

ऋतं सृष्टेः पूर्वं प्रकटितमभूत्सृष्टिजनका-
न्निबद्धा येनेयं सकलजगती सर्वसमयम्।
ऋतस्यैतस्यैवाननुसरणमत्यन्तमहितं
समष्टेर्व्यष्टेश्चाप्यखिलजगतो नाशजनकम्।।

ऋतं त्वेतत्सत्यः परमपुरुषस्यास्ति नियमो
वशे यस्य प्राहुः सकलजगतीं ज्ञानिपुरुषाः।
महीचन्द्रादित्याः पवन-जलधारा-गिरि-गुहाः
समे[१] तत्राधीनास्तदनुसरणं मङ्गलमयम्।।

## ऋत

(१)

'ऋत' सृष्टि के पूर्व सृष्टिकर्ता परमेश्वर से प्रकट हुआ, उसी से यह सम्पूर्ण ब्रह्माण्ड सब समय निबद्ध-नियन्त्रित है। इसका अनुसरण न करना, इसका उल्लङ्घन करना समाज और व्यक्ति, सभी का विनाश करने वाला है।

यह ऋत परम पुरुष परमेश्वर का सत्य नियम है जिसके अधीन सारी सृष्टि के होने की बात ज्ञानी पुरुष कहते हैं। पृथ्वी, वायु, सूर्यचन्द्रादि तेज, जलधारायें (नदियाँ), पर्वत, गुफायें-सभी कुछ इस ऋत के अधीन हैं और इसका अनुसरण मङ्गलमय, कल्याणकर है।

१. समे सर्वे इत्यर्थः।

ऋते या गतिः सामरस्यं हि तस्यां
यथा भास्करस्य प्रकाशः समेभ्यः।
यथा स्यन्दमानाश्च नद्यः समेभ्यो
न रुद्धप्रवाहा भवन्त्यध्वमध्ये।।

यथा वान्ति वाताः समेषां कृते हि
यथा मेघवृष्टिः समेषां कृते च।
यथा वन्यवृक्षाः फलं धारयन्ति
समेषां कृते नैकपुंसः कृते च।।

'ऋत' में जो गति है, उसमें समरसता है। जैसे सूर्य का प्रकाश सभी के लिये है, जैसे प्रवाहमयी नदियों का जल सभी के लिये समान रूप से उपलब्ध है, वे बीच रास्ते रुक नहीं सकतीं, उनका प्रवाह अबाध गति से चलता रहता है।

जिस प्रकार वायु सभी के लिये बहता है, जैसे मेघों से जल की वृष्टि सभी के लिये समान रूप से होती है, जैसे वन के वृक्ष सभी के लिये फल धारण करते हैं, किसी एक के लिये नहीं।

इदं सामरस्यं यदा भेदबुद्ध्या
विनाश्येत लोभान्धदृष्ट्या कदापि।
तदा शान्तिभङ्गस्तदान्दोलनं च
भवत्येव राष्ट्रे समाजे च विश्वे।।

समाजो राष्ट्रं वा किमपि यदि तन्नानुसरति
अनीतिस्तस्मिन् वा वसति सततं सर्वसमयम्।
तदा तस्यास्तित्वं जगति न चिरायेति कथनम्
ऋषीणामाद्यानामपि च सुधियां शास्त्रविदुषाम्।।

यह समरसता जब कभी भेदबुद्धि के कारण स्वार्थान्ध दृष्टि से नष्ट कर दी जाती है, तभी राष्ट्र एवं समाज की, विश्व की शान्ति भङ्ग होती है और तभी उसमें हलचल पैदा होती है।

कोई समाज या राष्ट्र यदि 'ऋत'-सृष्टि के नियामक ईश्वरीय विधान-का अनुसरण छोड़, उस का उल्लङ्घन करने लगता है, उसमें सब समय अनीति बसने लगती है, तब लोक में उसका अस्तित्व देर तक नहीं बना रह सकता, उनका अस्तित्व संशयापन्न हो जाता है। ऐसा आद्य ऋषियों एवं शास्त्रज्ञ सुधीजनों का कहना है।

[ईश्वरीय प्रकृति ने जीने के साधन सभी प्राणियों के लिये उपलब्ध किये हैं। अतः सभी को उनकी उपलब्धि होनी चाहिये। यही 'ऋत' है, ईश्वरीय नियम है, सत्य सनातन धर्म है। उनका दुरुपयोग, अपव्यय अथवा बलपूर्वक अपहरण अधर्म है, पाप है]।

(२)

एवं सृष्टिविधारकश्च परमो धर्मोऽथ यत्स्यादृतं
ग्लानावस्य यदा ह्यधर्म-विभवो नित्यं हि संवर्धते।
तस्मिन्नेव महाविपत्तिसमये भारान् जनान् वै भुवो
दूरीकर्तुमहो दिवोऽवतरणं सृष्टौ च निश्चप्रचम्॥

राज्ञः कर्णस्य दुर्बुद्धेर्दुर्वृत्तं वर्णयन् हरिः।
सर्वसामान्यधर्मं हि पारोक्ष्येणैव व्यक्तवान्॥

महीग्रस्तं सव्यं रणभुवि रथाङ्गं विधिवशात्
समुद्धर्तुं कर्णोऽर्जुनमसफलो यद्व्यकथयत्।
रथे स्थित्वा पार्थ! त्वमनुचितकृत्यं न कुरुषे
स्थिते भूमौ बाणान् मयि न विसृज त्वं कृपणधीः॥

( २ )

इस प्रकार जो सृष्टि को धारण करने वाला परमोच्च सनातन धर्म यह 'ऋत' है इसकी जब भी हानि, एवं अधर्म की वृद्धि होती है, तब सृष्टि के उस महाविपत्ति-काल में पृथ्वी के भारभूत दुर्जनों को दूर करने के लिये द्युलोक से प्रभु का अवतरण पृथ्वी पर होता हैं। यह ध्रुव सत्य है।

दुर्बुद्धि राजा कर्ण के दुश्चरितों-दुराचरणों का वर्णन करते हुये भगवान् श्रीकृष्ण ने परोक्षरूप से ही इस सर्व-सामान्य धर्म का रूप स्पष्ट कर दिया था (महाभारत युद्धस्थल में)।

भूमि में धंसे हुये अपने रथ के बायें चक्के (पहिये) को उभारने (ऊपर उठाने) में असमर्थ कर्ण, ने जब अर्जुन से निवेदन किया कि पार्थपुत्र अर्जुन! रथस्थ तुम भूमि पर खड़े मुझ पर बाण न छोड़ो, यह अधर्म है, अनुचित कार्य है।

समीपस्थः कृष्णः परमचतुरः कर्णमवदत्
स्मर त्वं कर्ण! स्वं कृतमधिकमाक्षेपसहितम्।
विपत्तौ स्थित्वाऽद्य त्वमपि श्रयसे धर्ममवशः
इतः पूर्वं धर्मस्तव कथय सूत! क्व नु गतः??

यद् द्रौपदीमेकपटां सभाया-
मानाययेस्त्वं ससुयोधनो हि।
दुःशासनेनापि च सौबलेन
युक्तो, न तेऽभात्सहजोऽपि धर्मः।।

अक्षानभिज्ञोऽपि युधिष्ठिरो हि
द्यूते सभायां छलपूर्णरीत्या।
नियोजितश्चापि जितश्च कर्ण!
परं विपन्नोऽथ च सौबलेन।।

तब समीप ही स्थित परम चतुर श्रीकृष्ण जी ने कर्ण से इस प्रकार कहा- कर्ण! तुम स्वयं अपने अति निन्दनीय आचरण का स्मरण करो। आज विपत्ति में पड़ने पर तुम विवश होकर धर्म की दुहाई दे रहे हो। सूतपुत्र! यह तो बताओ कि इसके पूर्व तुम्हारा धर्म कहाँ था?

शकुनि के साथ तुम और दुर्योधन ने जब एकवस्त्रा दुश्शासन के हाथों द्रौपदी को खिंचवाते हुये राजसभा में उपस्थित करवाया, तब सर्व-सामान्य सहज (मानवीय) धर्म तुम्हें नहीं दिखाई पड़ा, नहीं ज्ञात हुआ?

जुये से अपरिचित भी युधिष्ठिर सभा में तुम्हारे एवं शकुनि के द्वारा छल से उसे खेलने में लगाये गये और जीत लिये जाने पर बड़ी विपत्ति में पड़ गये।

प्रच्छन्नरूपेण च यापितेऽब्दे
त्रयोदशे तस्य न राज्यप्राप्तिः।
राज्ञे च बुद्धिं त्वमदा न चान्य-
स्तदा क्व चासीत्तव धर्मबुद्धिः??

दुर्योधनस्त्वन्मतमात्मनीनं
चकार भीमाय विषं ददौ च।
लाक्षागृहे सुप्तसुतान् पृथाया
आदीपयस्ते क्व तदा स्वधर्मः??

राज्ञां सभायां प्रहसंश्च कृष्णां
दुःशासनेन स्ववशे कृतां च।
त्वमेव राधेय! वचांस्यवादीः
पाण्डोः सुतान्नाशगतांस्त्यज त्वम्।।

(शर्त के अनुसार, बारह वर्ष वन में एवं) तेरहवाँ वर्ष गुप्त रूप से बिताने पर भी उनका राज्य उन्हें वापस नहीं किया गया। राजा दुर्योधन को तुम्हीं ने ऐसी बुद्धि दी थी, अन्य किसी ने नहीं। कर्ण! तब तुम्हारी धर्मबुद्धि कहाँ थी?

दुर्योधन ने तुम्हारे ही द्वारा दी गई मति को स्वीकार करके भीम को विष दिया। लाक्षागृह में सोये हुये कुन्ती-पुत्रों को भस्म कर देने के लिये ही तुमने आग लगवायी। तब तुम्हारा धर्म कहाँ था?

दुष्ट दुःशासन के द्वारा अपने वश में की गई द्रौपदी का राजसभा में उपहास करते हुये, कर्ण! तुम्हीं ने उससे ये वचन कहे थे कि तुम नाश को प्राप्त हुये पाण्डवों को छोड़ दो।

अन्यं पतिं स्वीकुरु याज्ञसेनि!
आशां च तेषां न कुरुष्व देवि।
कुर्वंश्च वाचां व्यवहारमेवं
त्वया कथं नैव स्मृतः स्वधर्मः??

यदाऽभिमन्युं बहवो जघन्या
महारथाः कौरवसैन्यवीराः।
बालं रणे जघ्नुरिदं च वृत्तं
तवाग्र एव, त्वमवागतिष्ठः।।

अयं च धर्मो न तदा ह्यविद्यत
कुतोऽयमत्रागत इत्यहो वद।
न त्वं कथञ्चित् स्वकृतैश्च पापै-
र्मुक्तो भवेरत्र सुनिश्चितं भोः।।

द्रौपदी ! अब तुम किसी अन्य को पति बना लो, देवि ! अब उनकी आशा न करो। इस प्रकार के वचन बोलते हुये, कर्ण ! तुम्हें अपना धर्म कैसे याद नहीं आया?

जब अनेक महापापी (नीच) कौरवसेना के महारथियों ने किशोर-वय अभिमन्यु को मार डाला, और यह घटना तुम्हारे ही सामने घटित हुई, तब भी तुम चुप ही खड़े रहे। उस समय भी तुम्हें धर्म की याद नहीं आई, बड़े ही आश्चर्य की बात है।

जब यह धर्म तब नहीं था, तो यह बताओ कि यह यहाँ कहाँ से आ गया? कर्ण ! यह सर्वथा निश्चित है कि तुम अपने द्वारा किये गये पापों से किसी भी तरह से छुटकारा नहीं पा सकते (इन्हें तो तुम्हें भोगना ही पड़ेगा)।

# निराकारः परमेश्वरः

ब्रह्मा प्रजापतिपतिः सृजतीह जीवान्
विष्णुश्च रक्षतितमां सकलैश्च देवैः।
अन्ते हरो हरति तान् सकलैः सहायैः
मायाविभूतय इमे परमेश्वरस्य।।

# निराकार परमेश्वर

सृष्टि के आदि में प्रजापति-पति भगवान् ब्रह्मा अपने मानस-पुत्रों मरीचि, अङ्गिरा आदि नौ प्रजापतियों के सहयोग से असंख्य जीवों को तत्तत्कर्मानुसार विविध योनियों में उत्पन्न करते हैं। सृष्टि के स्थिति-काल में भगवान् विष्णु अपने सहयोगी इन्द्रादि देवों, मनुओं तथा पार्थिवों के साथ उनकी सतत रक्षा करते हैं। अन्तकाल आने पर भगवान् हर (महादेव) अपने सहयोगी आठ प्रमुख नागों तथा असुरों आदि के साथ सृष्टि का संहार करते हैं। ये त्रिदेव मायाधिपति परमेश्वर (परमपुरुष) की ही माया-रचित विभूतियाँ हैं[1]।

१. द्र०भाग० II-७।३९-

सर्गे तपोऽहमृषयो नव ये प्रजेशाः स्थाने च धर्ममखमन्वमरावनीशाः।
अन्ते त्वधर्महरमन्युवशासुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः।।

एषा त्रयी विविधरूपभिदाभिमाना
मायापतेर्भगवतः पुरुषोत्तमस्य।
रूपत्रयेण सहिता सततं निदेशे
व्यस्ता समस्तसमये जगतो हिताय॥

ब्रह्मा चतुर्मुखसमेतशरीरयुक्तो
विष्णुश्चतुर्भुजधरश्च गदादियुक्तः।
भागीरथीसहितचन्द्रधरो महेशः
सर्वेऽप्यपारबलवीर्यसमन्विता हि॥

ब्रह्मा, विष्णु एवं महेश, यह देव-त्रयी विभिन्न रूपों (आकृतियों) वाली हैं। मैं चतुर्मुख हूँ, मैं चतुर्भुज हूँ, मैं चन्द्रभाल एवं गङ्गाधर हूँ-इस प्रकार का तीनों देवों का स्वाकार-विषयक अभिमान है। अपने-अपने पृथक् रूप से युक्त ये तीनों देव मायाधिपति अनन्तशक्ति-सम्पन्न परमेश्वर के आदेश से लोकहित करने में सतत व्यस्त रहते हैं।

चार मुख वाले शरीर से युक्त ब्रह्मा जी, चतुर्भुज शरीर तथा चार हाथों में शंख-चक्र-गदा-पद्म नामक शस्त्रों को धारण करने वाले विष्णु जी एवं शिर पर गङ्गा जी तथा भाल पर चन्द्रमा को धारण करने वाले शिव जी-तीनों ही देव अपार बल-वीर्य से सुसम्पन्न हैं।

सर्वानीशानविष्णुद्रुहिणदिनमणीन्निर्जराधीश्वरांश्च
अन्यान्वै लोकपालान् यमवरुणमरुद्रुद्रशक्रादिदेवान्।
लोकानां पालनादौ समुचितविधया योजयन्स्वे नियोगे
जेता देवाधिदेवः परमसुखसुधासाररूपः परेशः।।

यत्कारुण्यमुदारता भगवतो यन्मार्दवं तद्धृदः
यत्कातर्यमुतापि या विकलता भक्ते स्व आपद्गते।
यन्नैराश्यगतस्य दुःखितजनस्याश्वासनं सर्वतः
तच्चालेखितुमक्षमाश्च बहवो चित्रे रता गर्विताः।।

शिवजी, विष्णुजी, ब्रह्मा जी, सूर्य, एवं अन्य देवेश्वरों तथा यम, वरुण, वायु, रुद्र, इन्द्र इत्यादि लोकपालों को लोककल्याणार्थ अपने-अपने कार्यों में समुचित प्रकार से लगाते हुये देवाधिदेव परमानन्द रूप अमृत की धारा-वृष्टि[1] करने वाले परमेश्वर सदैव जेता (√जि+तृच्, प्र०पु०ए०) अर्थात् जयशील हैं। जय हो ऐसे प्रभु की।

प्रभु की जो करुणा, उदारता तथा हृदय की सुकुमारता है, अपने भक्त के विपन्न और आर्त होने पर उनमें जो कातरता एवं विकलता देखी जाती है, एवं निराश-हताश दुःखी भक्त को उनका जो आश्वासन या ढाढस (धैर्य) बँधाना है, उस सब का चित्रण करने का गर्व करने वाले बहुतेरे चितेरे असमर्थ-असफल हो गये।

---

१. 'धारा सम्पात आसारः' इत्यमरः। धारा बाँध कर निरन्तर होने वाली वर्षा को आसार कहते हैं।

## अवताराः

निराकारोऽपि सगुणः स यदा हितकाम्यया।
लोकस्यावतरत्यत्र तदा मूर्तो हि दृश्यते।।

रामकृष्णादिरूपेणावतीर्णः परमेश्वरः।
धर्मत्राणमधर्मस्य विनाशं कुरुते ह्यसौ।।

स्वयं सरस्वतीदेवी गुरुर्वा ब्रह्मणस्पतिः।
निरुपमां छविं तेषां नैव वर्णयितुं क्षमः।।

छविं लेखितुं चित्रकाराः सुदक्षाः
न जाने कियन्तः प्रयासं विदध्युः।
परं नैव साफल्यमापुर्जगत्या-
महो ईदृशी तच्छवी रम्यरूपा।।

## अवतार

निराकार भी सगुण (मायाधिपति) परमेश्वर जब लोक-हित कामना से यहाँ अवतीर्ण होते हैं, तब वे आकारवान्-मूर्तिमान् होकर दृष्टिगोचर होते हैं।

राम, कृष्ण आदि रूपों में अवतीर्ण होकर प्रभु धर्म की रक्षा और अधर्म का विनाश करते हैं।

स्वयं भगवती सरस्वती अथवा ब्रह्मणस्पति भगवान् बृहस्पति इन अवतारों की अनुपम छवि का वर्णन करने में समर्थ नहीं हैं।

इन अवतारों की इस अनुपम छवि को चित्रित करने का प्रयास न जाने कितने ही चतुर चितेरे करते रहे, फिर भी उन्हें इसमें पूर्ण सफलता नहीं मिली। अहो! वह रम्य छवि, वह निरूपम शोभा है ही कुछ ऐसी आश्चर्यकारिणी, ऐसी अनोखी और निराली।

# भगवत्स्तुतिः

(१)

गाढे तमसि विलीनं मार्गमालोकयसि सदैव विभो!
अतः प्राथ्यसे सर्वैस्तमसो ज्योतिर्गमय मां दीप्तिमय!!

बलं सदा बलहीनानां त्वं, त्वद्बलमाप्त्वा नित्यनिर्भया!
स्ते विचरन्ति न चिन्ता काचित्तेषां स्वप्नेऽपीह दयामय!!

धनं निर्धनानां प्रवरं त्वं, तैराहूतो द्रुतमागच्छसि!
समादधासि काठिन्यं सर्वं, प्रभो! सपदि करुणामय!!

# भगवत्स्तुति

(१)

हे प्रभो! घोर अन्धकार में विलीन अदृश्य मार्ग को आप भक्तों के लिये सदैव प्रकाशित-आलोकित करते हैं। अतः सभी निवेदन करते हैं, प्रार्थना करते हैं कि ज्योतिर्मय देवाधिदेव! मुझे गहन तमस् से ज्योति की ओर ले चलें।

दयालु प्रभो! आप निर्बलों के बल हैं, आप से बल पाकर नित्य निर्भय हो कर वे स्वच्छन्द विचरण करते हैं, एवं स्वप्न में भी उन्हें कोई चिन्ता नहीं सताती।

करुणामय प्रभो! आप निर्धनों के श्रेष्ठ (अक्षय) धन हैं। आर्त होकर बुलाने पर आप तुरन्त दौड़े आते हैं और सारी कठिनाइयों-विपत्तियों का समाधान कर देते हैं।

साहाय्यार्थं करिणा करुणं यदा प्रार्थितः समवाप्तस्त्वम्।
सपदि पदातिर्ग्राहं हत्वा गजो मोचितस्त्वद्गतिमाप्तः।।

कीर्तिरियं सुखदा भावत्की भक्तकृते कथनीया नित्यम्।
स्मारं स्मारं भक्तजना यां पारं यान्ति भवाब्धेः सत्यम्।।

विपन्न गजराज ने जब आर्त होकर आपसे सहायतार्थ प्रार्थना की तो आप गरुड़ पर सवार होकर दौड़ पड़े परन्तु विलम्ब होते देख कर झट पैदल ही दौड़ पड़े और चक्र से ग्राह का वध करके उसे छुड़ा लिया और वह सद्गति को प्राप्त हो गया।

प्रभो! आप की यह सुखद कीर्ति भक्तों के लिये नित्य ही कीर्तन-कथन करने योग्य है जिसे निरन्तर स्मरण करते हुये भक्त जन सचमुच भवसागर तर जाते हैं।

(२)

जगत्तवास्तीति न तत्र कश्चना-
प्यनिश्चयोऽस्तीति मयाऽनुमीयते।
एवं तवाहं त्वमपीह मामको
द्वयोस्तु सम्बन्धविधानमस्ति च॥

भवान् मदीयो न हि तत्र संशयो-
ऽस्त्वितीयमस्मद्दृढभावना प्रभो!
ततो मदीये हृदये जगत्प्रभो
भवेत् स्थिरेयं न चलेत् कदाचन॥

(२)

प्रभो ! यह सारी सृष्टि तुम्हारी है, सारा जगत् तुम्हारा है, इसमें तनिक भी सन्देह नहीं ऐसा मेरा मानना है। इस प्रकार मैं आपका और आप मेरे हैं। हम दोनों के बीच प्रगाढ़ सम्बन्ध है।

आप मेरे हैं, इस बात में तो संशय है ही नहीं। ऐसी मेरी दृढ़ भावना है प्रभो ! तब फिर मेरे हृदय में यह भावना सदा-सदा के लिये स्थिर-दृढ़-हो जाय, हृदय से कभी भी निकले नहीं।

(३)

भावबुभुक्षुर्भगवान्, नैवं पश्यति केन किमानीतम्।
प्रत्युत पश्यति देवः, केन भावेनानीतमिति॥

किमानीतमिति मनुजो, देवस्तु केवलं भावं पश्यति।
भगवान् भावसंशुद्धिमत एवाह मानसं तपः॥

तपस्विमात्रं च मनो, भगवन्तमाप्तुमर्हतीति सत्यम्।
तस्माच्छुद्धो भावो, भगवत्प्राप्त्युपायो मुख्यः॥

(३)

भाव के भूखे भगवान् यह नहीं देखते कि कौन भक्त क्या ले आया है? प्रत्युत वे यह देखते हैं कि वह किस भाव से ले आया है।

क्या ले आया है, यह तो मनुष्य देखता है। इसके विपरीत प्रभु तो केवल भाव देखते हैं। इसी से भगवान ने गीता (१७।१६) में भावसंशुद्धि को वास्तविक मानस तप कहा है।

और तपस्वी मन ही भगवान् को प्राप्त करने में समर्थ होता है, यह बात सत्य है। अतः शुद्ध भाव ही भगवत्प्राप्ति का मुख्य उपाय (साधन) है।

गोप्यः प्रमाणं ह्यत्र गावः खगमृगशबर्यादयोऽपि।
कमलं करिणो बदरं शबर्याश्शाकं विदुरस्य च।।
शुद्धभावप्रतीकं, तत्तज्जग्राह भाववश्येशः।
दत्त्वाभीष्टं तेभ्यः, सुखिनस्तांश्चकार सर्वथा।।

धनेषु दारेषु च पुत्रबन्धुषु
प्रदत्तचित्तस्तु भवेत्सुदुःखितः।
न चेष्टतेऽन्वेष्टुममुं व्यथार्तिहं
य एक एवाश्रयणीय आपदि।।

इसमें प्रमाण हैं वृन्दावन की गोपियां और गायें, खग (जटायु), पशु (गज) एवं शबरी आदि तपस्विनियाँ। निश्छल भाव के प्रतीक गज के कमल, शबरी के बेर, और विदुर के साग को भाववश्य भगवान् ने सन्तुष्ट होकर स्वीकार करते हुये उन्हें उनका अभीष्ट देकर धन्य बना दिया, निहाल कर दिया।

धन में, स्त्रियों में, पुत्रों में तथा बन्धु-बान्धवों में दत्तचित्त (निरत) व्यक्ति अत्यन्त दुःखी रहता है। वह सारे दुःखों को हरने वाले उस एक (सर्व-स्रष्टा) को खोजने-जानने की चेष्टा नहीं करता जो आपत्ति-विपत्ति के दिनों का एकमात्र आश्रय है, सहारा है।

## साकार ईश्वरः

चित्ताकर्षिणी शोभा निराकारे न विद्यते।
आकृतेर्ग्रहणेनैव चिदात्मा चित्तमोहकः।।

रामकृष्णादि-रूपाणां धारणान्मोहनो हरिः।
लघ्वाकारतया वंश्यां संवासः सुस्वरस्य हि।।

लघ्वाकारोऽपि मार्तण्ड उदितस्तमसः पुनः।
त्रिलोकव्यापिनो नाशं करोत्येव, न संशयः।।

साकेते मथुरायां वा जात एवं जगत्प्रभुः।
दुःखं लोकत्रयस्यैव विनाशयति मूलतः।।

## साकार ईश्वर

चित्त को समाकृष्ट करने वाली शोभा निराकार में नहीं होती। जब चिद्घन परमात्मा विशेष प्रयोजन से दिव्य आकार या मूर्ति ग्रहण करते हैं, तभी वह चित्त को मोह लेते हैं, मन्त्रमुग्ध कर लेते हैं।

राम, कृष्ण इत्यादि रूपों को धारण करके हरि 'मोहन' बन गये, यहाँ तक कि मदन-मोहन भी। सच तो यह है कि वंश (बांस) जब बंशी के लघु रूप या आकार में परिणत होता है, तभी इसमें 'सुस्वर' या स्वरमाधुर्य का वास होता है।

देखने में लघु आकार वाले भी भगवान् सूर्य उदित होते ही त्रिलोक में व्याप्त समस्त अन्धकार को निश्चित रूप से नष्ट कर देते हैं।

इसी प्रकार साकेत या मथुरा में अवतीर्ण जगत्प्रभु तीनों ही लोकों के सारे दुःखों को समूल उच्छिन्न कर देते हैं, नष्ट कर देते हैं।

## वामनो जाह्नवीस्रोतः

जातोऽदितावनुजो द्युषदां स्वयम्भू-
र्ज्यायान् गुणैः सकलबन्धुगणाद्धि विष्णुः।
रूपेण वामनवटुः प्रभयान्वितस्तु
सर्वैः समर्चितपदो नितरां विरेजे॥

देवैः कृशानुगुरुसोमरवीन्द्रमुख्यैः
सम्पादितोपनयनाध्वरकृत्यजातः।
ज्ञात्वाऽसुरेन्द्रकृतयज्ञमसौ सुरेन्द्रो
यातोऽर्चितस्तमनु गां त्रिपदीं ययाचे॥

## जाह्नवी के स्रोत (उद्गम) भगवान् वामन

द्युलोकवासी इन्द्रादि देवों के अनुज किन्तु गुणों में समस्त बन्धुओं से अधिक आकार में वामन (लघुरूप) किन्तु प्रभा से मण्डित अर्थात् तेजस्वी एवं सभी के द्वारा पूजित चरणों वाले देव-माता अदिति में आविर्भूत स्वयम्भू भगवान् विष्णु अत्यधिक सुशोभित हुये।

अग्नि, बृहस्पति, सोम, सूर्य, इन्द्र इत्यादि मुख्य देवों के द्वारा सम्पादित उपनयन आदि संस्कारों वाले सुरेन्द्र भगवान् वामन ने असुर-राज राजा बलि द्वारा किये जा रहे यज्ञ की जानकारी होने पर, उसमें जाने के अनन्तर उससे पूजित, सम्मानित होने के बाद तीन पग पृथ्वी की याचना की।

याच्ञां विरोचनसुतो गुरुवर्जितोऽपि
सोऽङ्गीचकार, तदनु स्वतनोर्विवृद्ध्या।
क्षित्यादिलोकसहितं विधिलोकमेव
व्याप्नोदुरुक्रमहरिः शिपिविष्टविष्णुः।।

ब्रह्मोरुगायचरणस्य कृतेऽर्हणोद-
मानीय तेन भगवच्चरणौ ममार्ज।
पादावनेजनपवित्रतया जलं तत्
स्वर्धुन्यभून्नभसि, सा च निमार्ष्टि लोकान्।।

प्रह्लाद-पुत्र विरोचन के पुत्र राजा बलि ने गुरु शुक्राचार्य के द्वारा वर्जित होने पर भी इस याचना को स्वीकार कर लिया। उसके अनन्तर अपने लघु आकार को खूब बढ़ाकर तेजस्वी भगवान् वामन विष्णु ने लम्बे-लम्बे पादन्यास (डग, कदम) द्वारा पृथिवी से लेकर ब्रह्मा जी के सत्यलोक तक फैले समस्त ब्रह्माण्ड को व्याप्त कर लिया।

ब्रह्मा जी ने उरुगाय अर्थात् लम्बे कदम वाले चरणों से युक्त विराट् वामन-विष्णु के लिये पाद्य (पैर धुलाने का जल) लेकर, उससे भगवच्चरणों को धोया। भगवत्पाद-प्रक्षालन से पवित्र हुआ वह जल नभोमण्डल में आकाश-गङ्गा बन गया, जो (राजा भगीरथ के द्वारा पृथ्वी पर लायी जाने से) पृथिवी आदि समस्त लोकों को शुद्ध-पवित्र कर रही है।

विष्णोर्वामनसंज्ञकस्य चरणान् ब्रह्मा यदक्षालयत्
तस्मादेव विनिःसृता भगवती गङ्गा परं पावनी।
त्रीँल्लोकान् प्रपुनात्यहो त्रिपथगेत्याख्यां शुभां विन्दति
एवं मुक्तिविधायिनं भगवतः पादं नुमो भूरिशः॥

तस्यैव पादकमलस्य महत्त्वमाख्यन्
ब्रह्मापि वामनमुवाच सुरेन्द्रमेवम्।
'देवाधिदेव! भगवंस्तव पादयोर्हि
माहात्म्यराशिकथने नहि कोऽपि शक्तः'॥

वामन-नामक भगवान् विष्णु के चरणों का जो प्रक्षालन ब्रह्मा जी ने किया, उसी से परम पावनी भगवती गङ्गा का उद्भव हुआ जो तीनों लोकों को पवित्र करने के कारण ही 'त्रिपथगा'-तीन पथों पर चलने वाली-नाम प्राप्त करती हैं। इस प्रकार तीनों लोकों में लोगों की मुक्ति का विधान करने वाले भगवच्चरणों की हम भूरि-भूरि वन्दना करते हैं।

उन्हीं के चरण-कमल का महत्त्व बताते हुये ब्रह्मा जी ने सुराधीश भगवान् वामन से इस प्रकार कहा-'देवाधिदेव! आप के चरणों के महत्त्व का वर्णन करने में कोई भी समर्थ नहीं है'।

दूर्वाङ्कुरैरपि ददत्सलिलं सपर्यां
कृत्वानयोरनतिदूरसमाप्तिकाले ।
अत्युत्तमां गतिमवाप्य जनो विवेकी
कालं नयत्यतिसुखेन पदार्चनेन।।

राजा बलिस्त्रिभुवनं त्वखिलं निवेद्य
तुभ्यं मनागपि न विक्लवमानसोऽस्ति।
ईदृक् त्वदीयचरणाम्बुजसेवकः सन्
वीराग्रणीः कथमवाप्स्यति नागबन्धम्??

दूर्वाङ्कुरों से भी इन पर जल छिड़क कर इनकी पूजा-अर्चना करके विवेकी पुरुष अनति-दूर समय में अत्युच्च गति प्राप्त करता है और परम सुख से काल व्यतीत करता है।

राजा बलि सारी त्रिलोकी ही आप के चरणों में अर्पित करके भी प्रसन्न-चित्त हैं, मन में किसी प्रकार का मालिन्य नहीं है। आप के चरणारविन्द का ऐसा भक्त वीराग्रणी पुरुष नाग-पाश कैसे प्राप्त करेगा?

इत्थं विधेर्वचनमर्थमयं निशम्य
प्रीतोऽदितेः सुत उवाच तमेवमेव।
मह्यं निवेद्य गुरवे सकलां त्रिलोकीं
यन्नैव सीदति ततो न विपत्तिमृच्छेत्॥

ब्रह्मन्! ददाम्यसुरराजकृते ह्यभीष्ट-
मैन्द्रं सुदुर्लभपदं द्युषदां कृतेऽपि।
सावर्णिसंज्ञकमनोः समये मदात्माऽ-
वश्यं भवेदखिलदेवगणस्य धुर्यः॥

तावद्विधे! सकलदुःखविपत्तिशून्यं
लोकं भजेत सुतरां सुतलाख्यमेव।
यत्राहमद्यतनवासरतः स्थितः सन्
प्राप्तप्रसादसुखमेतमतो विधास्ये॥

इस प्रकार ब्रह्मा जी के अर्थमय वचन सुनकर परम प्रसन्न अदिति-पुत्र भगवान् वामन ने उनसे इस प्रकार कहा-'मुझ सर्व-गुरु को सारी त्रिलोकी देकर भी यह जो मन में बिलकुल दुःखी नहीं है, अतः कथमपि विपत्ति नहीं प्राप्त करेगा।

ब्रह्मन्! मैं असुरराज राजा बलि को, देवों के लिये भी दुर्लभ उसका अभीष्ट ऐन्द्रपद दे रहा हूँ। यह सावर्णि मनु के समय में अवश्य ही देवगणों का स्वामी होगा। साथ ही सदैव मुझमें ही दत्तचित्त रहेगा।

तब तक, ब्रह्मा जी! यह समस्त कष्टों एवं विपत्तियों से रहित सुतल नामक अधोलोक में निवास करे, जहाँ मैं इसी दिन से स्थित रहकर, इसे अपने अनुग्रह-जन्य सुख का पात्र बनाऊंगा।'

## रामो राजमणिः

वाणी माध्वीकमिष्टा कमलसुमसमौ[1] कोमलौ यस्य पादौ
बाहू यस्य प्रलम्बौ नगरपरिघवत् सर्वरक्षाकरौ स्तः।
नेत्रे केशाश्च कर्षन्त्यखिलजनमनोमोहका यस्य लोकान्
रामो लोकावनोत्कः सदयहृदयवान् राजतां सर्वधीषु।।

## राजशिरोमणि-राम

जिसकी वाणी में द्राक्षा (अङ्गूर) का मिठास है, जिसके चरण कमल के फूल के समान सुकुमार हैं, जिसके बाहु नगर की अर्गला के समान बड़े लम्बे तथा सभी की रक्षा करने वाले हैं, समस्त लोकों के मन को मोहने वाले जिसके नेत्र एवं केश त्रिलोक के आकर्षण के केन्द्र हैं, लोकों की रक्षा को सदैव उत्सुक दयालु एवं सहृदय ऐसे श्रीराम सभी के हृदयों में, सभी की बुद्धि में विराजमान हों।

विशेष-वस्तुतः तो राम सबके हृदय में बसते ही हैं। 'राम' शब्द का अर्थ ही है-'रमते सर्वत्रेति रामः' अर्थात् जो सर्वत्र रमे हुये हैं, वे राम हैं। भगवद्गीता के अग्रिम वचन इस सम्बन्ध में स्मरणीय हैं-अहमात्मा गुडाकेश सर्वभूताशयस्थितः (१०।२०), सर्वस्य चाहं हृदि सन्निविष्टः (१५।१५), हृदि सर्वस्य विष्ठितम् (१३।१७), ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति (१८।६१)। इस तथ्य को कबीर ने भी इस प्रकार प्रकट किया है-कस्तूरी कुण्डल बसै, मृग ढूँढै, वन माँहिं। ऐसे घट-घट राम हैं, दुनियाँ जानै नाहिं।।

किन्तु यह तथ्य न तो सर्व-साधारण के चित्त में रहता है और न ही सर्व-साधारण इसका ध्यान-मनन ही करता है। इसीलिये 'राजताम्' अर्थात् 'विराजमान हों', ऐसी प्रार्थना प्रभु राम से की गई है। सन्तशिरोमणि गोस्वामी जी ने भी इसी अभिप्राय से 'मम हृदय-कंज निवास कुरु कामादिखलदलगञ्जनम्' स्तुति की है। भागवत इत्यादि में अन्तःस्थ अन्तर्यामी परम पुरुष की उपासना की बड़ी महिमा गायी गयी है।



१. कमलसुमं कमलपुष्पम्, तस्य समौ तुल्यौ कमलसुमसमौ।

देव्यप्यहल्या रघुराजपाद-
रजःकणैः सत्वरमेव लालिता।
पत्युश्च शापाद् द्रुतमेव मुक्ता
शिलात्वमुक्ता सुखिनी बभूव ह।।

कृतो निषादश्च सखा समानं[1]
कृतः सखा यच्च कपिः सुकण्ठः।
त्रैलोक्यशल्योद्धरणं कृतं यत्
सिन्धोश्च बन्धो हि कृतस्तदर्थम्।।

खरः सुबाहुस्त्रिशिराश्च दूषणः
समे हता लोकहिताय यत्खलु।
समादृता यन्मुनयो महर्षयो
समं हि लोकोत्तरकर्म श्रीहरेः।।

अपने पति गौतम ऋषि के शाप से शिला बन गई देवी अहल्या रघुराज भगवान् राम की चरणरजं पाकर शाप से शीघ्र ही विमुक्त होकर शिला से फिर भव्य नारी होकर सदा-सदा के लिये सुखी हो गई।

निषादराज गुह को जो आदर-पूर्वक प्रिय बन्धु बनाया, जो सुग्रीव से भी मित्रता की, लोकजीवन के कण्टक सन्तापी रावण को उखाड़ फेंकने के लिये जो समुद्र पर पुल बाँधा।

इसी प्रकार जो खर-दूषण-त्रिशिरा और सुबाहु को लोक-हित के लिये मृत्यु के घाट उतार दिया, एवं उनसे सन्तप्त मुनियों-महर्षियों को जो सम्मान-सुख दिया, वह सब कुछ भगवान् राम का लोकोत्तर चरित था।

---

१. मानेन सह समानमादरपूर्वकमित्यर्थः।

लोकाभिरामं रणरङ्गधीर-
माजानुबाहुं धृतबाणचापम्।
राज्ञां मणिं लोकहिते रतं च
रामं रमेशं मनसा भजेत॥

भक्तार्तिहर्ता करुणाकरश्च
स्मर्तुर्मनःशान्तिकरः परश्च।
दयापरो दीनदयालुबन्धुः
श्रीरामचन्द्रः शरणं समेषाम्॥

रे चित्त! चिन्तय चिरं चरणारविन्दं
रामाभिधानपुरुषोत्तमदीनबन्धोः[१]।
यद्दण्डकासुरजनैः प्रतिहन्यमाना
आर्ताः प्रजाः सुखयितुं भृशदुःखमाप॥

युद्ध-स्थल में स्थिर रहने वाले, आजानुबाहु, धनुष-बाण से सुसज्जित, राजाओं में श्रेष्ठ, लोकहित में सदैव निरत, रमेश (सीतापति) लोकाभिराम भगवान् राम को मन से स्मरण करते रहना चाहिये।

भक्तजनों की पीड़ा हरने वाले, करुणा की खान, स्मरण करने वाले के मन को परम शान्ति देने वाले, दयालु, दीनबन्धु भगवान् राम सभी जनों की शरण हैं।

रे चित्त! दीनबन्धु पुरुषोत्तम भगवान् राम के उन चरणों का निरन्तर स्मरण कर, जिन्होंने दण्डकारण्य के राक्षसों से प्रतिक्षण सताये जाते रहने से दुःखी दीन-हीन जनों को सुखी करने के लिये (कुशों और कांटों से भरे हुये मार्ग पर चलते हुये उनसे विंध जाने के कारण) बड़ा कष्ट पाया।

१. राम इत्यभिधानं यस्य स रामाभिधानः। स चासौ पुरुषोत्तमश्चेति रामा०। स चासौ दीनबन्धुश्चेति रामाभिधानपुरुषोत्तमदीनबन्धुः, तस्य।

## राम-भक्तिः सुखावहा

देवतानायकः[1] प्राणसंरक्षकः
सर्वदा सर्वदो[2] युद्धधीरः सदा।
जानकीवल्लभो रामनारायण-
श्चिद्घनश्चिन्तनीयस्सदा रक्षकः।।

प्रेममात्रस्य नित्यं बुभुक्षा विभो-
र्वस्तुनोऽन्यस्य काचिन्न लिप्सा प्रभोः।
यो भजेद्देवदेवं धिया धीरया
तस्य मुक्तिर्ध्रुवा दुःखजातात्[3] सदा।।

## राम की भक्ति सुखदायिनी है

देवाधिदेव, प्राणों के रक्षक, सदैव सभी अभीष्टों को देने वाले, युद्धस्थली में सदैव स्थिर रहने वाले, शुद्ध चिद्घन एवं सर्वरक्षक, सीतापति, भगवान् राम का नित्य चिन्तन-स्मरण करना चाहिए।

प्रभु राम केवल प्रेम के भूखे हैं, उन्हें अन्य किसी भी सांसारिक वस्तु की अपेक्षा नहीं। जो भी व्यक्ति स्थिर बुद्धि से देवाधिदेव भगवान् राम को भजता है, उसकी दुःखों से मुक्ति निश्चित है।

१. देवानां समूहो देवता, तस्या नायको देवतानायकः।
२. सर्वमभीष्टं ददातीति सर्वदः।
३. दुःखानां जातं समूहो दुःखजातम्, तस्मात्।

ईदृशः श्रेष्ठभक्तः प्रियः स्वामिन-
स्तेन तज्जीवनं सर्वथा सार्थकम्।
जन्म मानुष्यकं प्राप्य देवप्रियं
तर्हि भावप्रियं राजराजं भजेत्।।

भगवान् राम का ऐसा श्रेष्ठ भक्त उन्हें परम प्रिय है। उससे उसका जीवन सर्वथा सार्थक है। तो फिर देवों को भी प्रिय मानव-जन्म पाकर भाव के भूखे, राजाओं के भी राजा श्रीराम को भजना चाहिये।

## मालिनी
### (मिथिलायां रामस्वागतोत्सुका)

अद्य भाग्यं परं तीरभुक्त्या अहो!
आगतो यत्र रामः परं पावनो।
लोकनेत्राभिरामोऽतिसौख्यप्रदो
लक्ष्मणेनानुयातो जगद्वन्दितः।।

तत्समाराधनायोत्सुका मालिनी
पुष्पसम्भारपूर्णं गृहीत्वा करे।
भव्यकण्डोलकं याति तत्सन्निधौ
वन्दना-लालसां बिभ्रती मानसे।।

कीदृशी भाग्यसम्पच्चमत्कारिणी
वर्ततेऽस्या, न जाने, कियन्मङ्गलं।
पूर्वजन्मस्वियं संविधायाद्य वै
जन्म लेभे परं साध्विदं सार्थकम्??

## मालिनी
### ( मिथिलापुरी में गये राम के स्वागत-सम्मान को उत्सुक )

अहो! आज तीरभुक्ति (तिरहुत) मिथिला का परम सौभाग्य है जहां परम पावन जगद्वन्द्य, परम सुख देने वाले नयनाभिराम राम अनुज लक्ष्मण के साथ पधारे हैं।

उनके समाराधनार्थ उत्सुक मालिनी हाथ में पुष्प-सम्भार से युक्त भव्य टोकरी (डोलची) लिये हुये, मन में वन्दना-लालसा लिये, उनके समीप जा रही है।

न जाने, इस मालिनी की कैसी आश्चर्यकारिणी भाग्यसम्पद् है? इसने पूर्व जन्मों में, न जाने, कितना शुभ आचरण (कर्म) किया है जो आज यह (वर्तमान) परम सुन्दर और सार्थक जन्म प्राप्त किया है।

## गजराजः

मार्गे चलन् प्रतिदिनं निजमस्तके त-
त्पांसून् सदा धरसि यद्गजराज! मन्ये।
भक्त्या प्रयासनिरतोऽसि रजांसि चेतुं
रामस्य पादकमलस्य सुतारकाणि।।

## गजराज

गजराज! प्रतिदिन मार्ग पर चलते हुये तुम अपने मस्तक पर जो उसकी धूल धारण करते रहते हो, वह तुम (अहल्यादि अभिशप्तों को) तारने वाली, सद्गति देने वाली भगवान् राम के चरण-कमल की धूल खोजने में भक्तिपूर्वक प्रयास-रत हो, ऐसा मैं समझता हूँ।

## कृष्णः वन्द्यो जगद्गुरुः

विष्णोर्वामनसंज्ञकस्य चरणाद्गङ्गा यथा निस्सृता
विष्णोर्विश्वविमोहनस्य वदनात् कृष्णाभिधानस्य वै।
पार्थस्य प्रतिबोधनाय भगवद्गीता भवद्वेषिणी
जाता विश्वगुरोस्तथा मधुपतेर्भक्तार्थसिद्धिप्रदा।।

स्मरेन्मुरारेश्चरणाम्बुजं तत्, पदे पदे यन्मुखरीकरोति।
सुशोभनं नूपुरभङ्क्तिताश्च यदीयचिह्नैर्व्रजवीथयो हि।।

## वन्दनीय श्री कृष्ण जगत् के गुरु

जैसे वामन-नामधारी भगवान् विष्णु के चरणों से त्रिलोक-पावनी गङ्गा जी का प्रादुर्भाव हुआ, वैसे ही अपनी रूपमाधुरी से त्रिलोक को मोहने वाले विश्वगुरु श्री कृष्ण-नामधारी भगवान् विष्णु के मुख से जन्म-मृत्यु के बन्धन को काटने वाली भगवती गीता का प्रादुर्भाव पृथा-पुत्र अर्जुन के तत्त्वज्ञान के लिये हुआ। वह श्रीमद्भगवद्गीता भक्तों के सभी अभीष्टों को देने वाली है।

मुरारि भगवान् घनश्याम श्रीकृष्ण जी के उन चरणारविन्दों का स्मरण करना चाहिये, जो पग-पग (प्रत्येक पाद-न्यास) पर, उनमें सुशोभित नूपुरों को ध्वनित करते हैं, एवं जिनके चिह्नों से ब्रज की वीथियाँ (गलियाँ) निश्चित ही शोभित होती हैं।

को नाम लोके हि नरो विवेकी
पादाब्जमीदृग्नहि सेवते यः।
चलापि यच्छ्रीर्न जहाति कर्हिचित्
कथं त्यजेत्तच्छ्रिय उत्सुको नरः।।

केशैः कृष्टां सभायामसुरजनसमो धार्तराष्ट्रो हि कृष्णां
नग्नां कर्तुं च यावत्सकलजनपुरः शाटिकाकर्षणं वै।
आरेभे, तावदेव प्रभुचरणरता सर्वथा विह्वलासौ
कृष्णा संस्मार कृष्णं, स च सकलविपन्नाशकः सम्बभूव।।

लोक में भला कौन विवेकी पुरुष होगा जो ऐसे महनीय चरण-कमलों का भजन-सेवन न करेगा। जिन्हें चञ्चल (अस्थिर) लक्ष्मी भी कभी नहीं छोड़तीं, उन्हीं लक्ष्मी को पाने की लालसा रखने वाला मनुष्य उन्हें भला कैसे छोड़ सकता है?

आसुरी वृत्ति वाले दुश्शासन ने केश पकड़ कर खींची जाती हुई कृष्णा (द्रौपदी) को राजसभा में लाकर ज्यों ही सभी जनों के समक्ष नग्न करने के लिए साड़ी खींचना शुरू किया, त्यों ही प्रभु-चरणों में समर्पित विह्वल-विकल कृष्णा (द्रौपदी) ने श्रीकृष्ण जी का स्मरण किया जिन्होंने (साड़ी की अनन्त वृद्धि करके) उसकी सारी विपत्ति का नाश कर दिया।

द्रौण्यस्त्रभीता शरणं गतोत्तरा
स्वकीयगर्भस्य हि रक्षणार्थम्।
शौरिं प्रपन्ना मनसातिदीना
निवेदयामास यदा व्यथां स्वाम्।।

तदैव कुक्षिं गत आत्तचक्रो
जुगोप कृष्णः कुरुवंशबीजम्।
स एव राजर्षिपरीक्षितोऽभूद्
गर्भे हि कृष्णेन परीक्षितत्वात्।।

द्रोणाचार्य के पुत्र अश्वत्थामा के ब्रह्मास्त्र से भयभीत होकर भगवान् श्रीकृष्ण की शरण में गयी हुयी, मन से अत्यन्त दीन उत्तरा ने अपने गर्भ की रक्षा के लिये ज्यों ही उनसे निवेदन किया, उसी क्षण उन्होंने कुरुवंश के बीज की रक्षा के लिये हाथ में चक्र लिये उत्तरा की कोख में (सङ्कल्पमात्र से) प्रवेश कर उस बीज की रक्षा की। वही बीज भगवान् कृष्ण के द्वारा गर्भ में सर्वतः ईक्षित होने के कारण राजर्षि परीक्षित नाम से प्रसिद्ध हुआ।

श्रीकृष्णेन सुदामदैन्यविकलेनेष्टाः प्रदत्ताः श्रियः
ग्राहग्रस्तगजोऽपि तेन हरिणा पादातिकेनोद्धृतः।
कुब्जा वक्र्यनुलेपतुष्टमनसा कृष्णेन ऋज्वीकृता
भक्तानां नितरां मनःसुखकरी लीला स्मृता श्रीहरेः।।

कृष्णानुरागिचित्तस्य विचित्रैव गतिः सखे!
असकृद् ब्रुडित्वा तस्मिन् न कृष्णमपितूज्ज्वलम्।।

विप्र सुदामा की दीनता से विह्वल भगवान् श्रीकृष्ण ज़ी ने उन्हें सारी अभीष्ट ऋद्धि-सिद्धियाँ दे डालीं। ग्राह से गृहीत गज का पैदल ही दौड़कर प्रभु ने उद्धार किया, ग्राह का मुख चक्र से फाड़ कर गज को उसकी पकड़ से मुक्त कर दिया। अङ्ग-भङ्ग वाली कुब्जा के चन्दनादिलेप से सन्तुष्ट भगवान् श्रीकृष्ण ने उसे अङ्ग-भङ्ग दूर कर सीधी कर दिया। प्रभु की ये लीलायें स्मरण की जाने पर भक्तों के मन को हर्षित-उल्लसित करने वाली हैं।

मित्र! कृष्णानुरागी मन की विचित्र ही गति है, जो कृष्ण में सतत (लगातार) डूबा हुआ कृष्ण-काला, विकारयुक्त-नहीं रहता प्रत्युत विकारों से मुक्त होकर उज्ज्वल परम सात्त्विक हो जाता है।

## हरेर्नामानुकीर्तनम्

शिवहरे[१] शिवकृष्ण! कृपानिधे!
यदुपतेऽखिलताप-निवारक!!
अज! जनेश्वर! यादव! श्रीहरे!
नरहरे[२] ! स्वजनेषु कृपां कुरु!!

सुखद! मङ्गल! माधव! मापते[३]!
सदयदेव! शुभप्रद! श्रीपते!
सकलदेवसमर्च्य! महीपते!
सकलजीवहिते निरत! प्रभो!!

## हरि-नाम-कीर्तन

कल्याणमय प्रभो! मङ्गलमय कृष्ण! कृपानिधे! आध्यात्मिक-आधिदैविक-आधिभौतिक समस्त दुःखों का नाश करने वाले विभो! वस्तुतः कभी भी जन्म न लेने वाले जनेश्वर! यदुवंश-भूषण देव! मेरी सर्वविध रक्षा करें।

सुखद! मङ्गलरूप! माधव! लक्ष्मीपते! दयामय देव! कल्याणप्रद! श्रीपते! समस्त देवों के प्रणम्य देवाधिदेव! पृथ्वी आदि समस्त लोकों के स्वामिन् ! समस्त प्राणियों के हित में सदा निरत-तत्पर प्रभो!

---

१. शिवात्मको हरिरिति शिवहरिः। शिवः कल्याणकरो वा हरिः शिवहरिः। तत्सम्बुद्धौ शिवहरे। एवमेव, शिवकृष्ण।

२. नरश्चासौ हरिश्च, नररूपो वाहरिः नरहरिः, मायया नररूपेणावतीर्णो विष्णुरित्यर्थः। यद्वा, हरिः सिंहः, हिरण्यकशिपोर्वधार्थं तत्पुत्रस्य प्रह्लादस्य रक्षार्थं च नृसिंहरूपेणावतीर्णो विष्णुः।

३. मा लक्ष्मीरित्यर्थः। तस्याः पतिरिति मापतिः, तत्सम्बुद्धौ मापते।

सुलभ! सुव्रत! देव! दयानिधे!
विदिश[1] ! रक्षण[2]! मोहन! केशव!
प्रणव[3]! मोक्षद! वेदविदां वर!
अनघ! पापनुदो भव भूपते!!

श्रीकृष्ण! गोविन्द! हरे! मुरारे!
गोपाल! गोपेश्वर! दीनबन्धो!
दामोदर! श्रीधर! कौस्तुभाङ्क!
दीनं जनं पाहि हरे! सदैव!!

सरल जनों के लिये सुलभ! कठोरव्रती! दयानिधे! भक्तों को उनका विविध इष्ट प्रदान करने वाले! भयभीतों में सुरक्षा का भाव उत्पन्न करने वाले, मोहन! केशव! जगद्वन्द्य (अथवा, ओङ्कार-स्वरूप)! मोक्ष देने वाले! वेदज्ञों में श्रेष्ठ! निष्पाप! पृथ्वीपते! हमारे पापों को दूर करें।

श्रीकृष्ण! गोविन्द! हरे! मुरारे! गोपाल! गोपेश्वर! दीनबन्धो! दामोदर! श्रीधर! कौस्तुभ मणिधारक! अपने इस दीन जन की सदैव रक्षा करें।

१. विविधं दिशति ददाति सर्वमपेक्षितमिष्टं वा स्वभक्तेभ्य इति विदिशः। विपूर्वकात् दिश् अतिसर्जने धातोः कः कर्तरि।
२. रक्षतीति रक्षणः। रक्ष धातोः 'बहुलमन्यत्रापि' (उणा० २।७८) इत्यनेन युच्। यद्वा, नन्दादित्वात् कर्तरि ल्युः।
३. प्रकर्षेण नूयते स्तूयते सर्वैरिति प्रणवो विष्णुः। यद्वा, प्रकर्षेण नूयते भगवान् नारायणोऽनेनेति प्रणवः ओङ्कारः, प्रभोर्विष्णोः सर्वोत्कृष्टं नाम, नामनामिनोरभेदात् प्रणवो विष्णुः।

## हरिनामानुरक्तः शुकः

हरिरित्यधिकं मधुरं शब्दं
अनिशं वंशेषूच्चारयसि
त्वमजस्रमहो! शुक! शर्म परं।
वितरस्यखिलेषु सखेऽनुदिनं
न क्लान्त्यनुभूतिमुपैषि सखे!!

हरौ लग्नं मनोऽवगतं किं सखे!
यद्धरिर्दुःखहर्ता भवच्छेदकः
आर्तिहर्ता परं प्रेमकर्ता परं।
तस्य नामैव सत्यं परं पावनं
सर्वसौख्यप्रदं सर्वशान्तिप्रदम्!!

## हरिनामनुरक्त शुक

सखे शुक! तुम वंशावलियों (बंसवरिया-लोकभाषा) में अत्यन्त मधुर 'हरि' नाम का सतत उच्चारण करते हुये[१], सभी को नित्य अपार सुख देते हो और इस पवित्र कर्म को करते हुये कभी भी क्लान्ति (थकावट) का अनुभव नहीं करते।

मित्र शुक! हरि में तुम्हारे मन के लगने का कारण क्या यहं जान लेना है कि हरि सारे दुःखों को हर लेने वाले, भव (जन्म-मरण) के बन्धन को काटने वाले, सारी पीड़ा-बाधा को दूर करने वाले एवं सहज स्नेही हैं; और उनका नाम ही सत्य है, परम पावन है, एवं समस्त सुखों की वर्षा करने वाला है, शान्ति देने वाला है।

---

१. 'बोलै हरी बँसवरिया में सुगना' -लोक-प्रसिद्ध गीत।

नामसङ्कीर्तनं शिक्षितं किं सखे!
पक्षिजन्म त्वया सार्थकं साधितुम्?
नामधेयं ततः 'कीर' इत्यस्ति किम्?
त्वद्धरिर्नाम किं वक्त्यभेदं हरेः
यत्फलं कीर्तनस्येति मन्ये सखे!!

मित्र शुक! क्या तुमने हरिनाम का सङ्कीर्तन सीखा है अपना पक्षि-जन्म सार्थक करने के लिये? तो क्या इसी कारण से तुम्हारा 'कीर' नाम हो गया? क्या तुम्हारा 'हरि' नाम भगवान 'हरि' से तुम्हारा अभेद व्यक्त करता है जो उस नाम के सङ्कीर्तन का फल है। (क्योंकि नामोच्चारण एवं उसके द्वारा नामी के सतत स्मरण से स्मर्ता तद्रूप हो जाता है, तत्स्वरूपता प्राप्त कर लेता है-ऐसी मान्यता है शास्त्रों की। साधु-सन्तों का स्वानुभव भी यही है)।

## भारतगौरवम्

अस्मद्देशः सर्वमहान्
हिमालयात्सागरपर्यन्तं
कच्छात्कामरूपपर्यन्तं।
प्रसृतोऽभीष्टो देवादीनां
भारतदेशः सर्वमहान् ....॥

शस्यश्यामा भूमिर्यस्य
सरितो यस्य सदा प्रवहन्ति
रामकृष्णयोः पावनदेशः।
बुद्धगान्धिनोः कर्मक्षेत्रं
भारतदेशः सर्वमहान् ....॥

## भारत-गौरव

हमारा प्यारा भारत सभी देशों से महान् है, गौरवशाली है। हिमालय से लेकर हिन्द महासागर तक, और कच्छ से लेकर कामरूप (असम-अरुणाचल) तक फैला हुआ हमारा विशाल भारत देश महान् है। यह देश इन्द्रादि देवों को भी प्रिय है।

जिसकी भूमि फसलों से सदैव हरी भरी रहती है, जिसकी सिन्धु, गङ्गा, ब्रह्मपुत्र, नर्मदा, गोदावरी और कावेरी आदि नदियाँ सदा प्रवहमान रहती हैं, कभी सूखती नहीं, जो भगवान् राम और कृष्ण का परम पावन देश है, जो भगवान् बुद्ध और महात्मा गांधी की कर्मभूमि है, वह हमारा प्यारा भारत सबसे महान् है।

सदा अखण्ड एक ऊर्जस्वी
भवतु पृथिव्यामुन्नतिशीलः
दोधूयेत पताका नित्यं।
विजयी सदा भवेदविनाशी
भारतदेशः सर्व महान् ....।।

अघात्मनां भारभरेण भङ्गुरां
[१]द्युषत्प्रियां [२]भारतगामिमां प्रभुः।
लघुं[३] विधातुं [४]त्रिदिवादवातर-
[५]द्गुरुस्तथासौ नितरां बभूव ह।।

सदा अखण्ड, एक, शक्तिशाली (ऊर्जा अर्थात शक्ति से सम्पन्न) हमारा प्रिय भारत पृथ्वी के समस्त देशों के मध्य उन्नतिशाली हो, इसका तिरङ्गा झण्डा सदैव ऊँचा फहराता-लहराता रहे, यह सदैव विजयी अपराजेय एवं स्थायी हो। हमारा भारतवर्ष सर्व-महान् है।

पापियों के भारातिशय से नष्टप्राय (अर्थात् रसातल जाने को विवश), इन्द्रादि देवों की भी प्रिय-भारत-भूमि का भार दूर कर उसे हल्की करने के लिये भगवान् ने स्वर्ग से अनेकशः अवतार लिया, किन्तु इससे भारतभूमि (सारी त्रिलोकी के भगवान् की कोख में स्थित रहने के कारण) और भी बोझिल हो गई।

टिप्पणी-प्रस्तुत श्लोक का प्रतीयमान अर्थ यह है कि, पहले से दुष्टों के भार से बोझिल पृथिवी पर भारी-भरकम भगवान् के उतर आने से उसका भार कई गुना बढ़ गया। आये तो थे भार उतारने, पर उसे उतारने के बजाय और भी बढ़ा दिया। इसका वास्तविक तात्पर्य यह है कि भगवान् के अवतारों से भारत-भूमि गौरवान्वित हुई, परम पावन एवं पूज्य हो गई। ['गुरु' का अर्थ भारी एवं महत्त्वपूर्ण, दोनों ही होता है]।

१. द्युषदः देवाः।
२. भारतस्य गौर्भूमिस्ताम्।
३. लघु-हल्की, कम भारवाली।
४. त्रिदिवं स्वर्गः।
५. गुरुः गौरवान्विता तथा च भारयुक्ता (अर्थात् बोझिल; विरोधाभास अलंकार व्यङ्ग्य है)।

## राष्ट्रभूम्यै नमो मातृभूम्यै नमः

राष्ट्रभूम्यै नमो मातृभूम्यै नमः।
देशभूम्यै नमो जन्मभूम्यै नमः।।

सर्वमात्रे नमः सर्वधात्र्यै नमः।
सर्वदात्र्यै नमः सर्वदेव्यै नमः।।

सर्ववन्द्या च या, सर्वपूज्या च या।
तद्यशः सर्वदा निश्चितं गायत।।

## स्वराष्ट्र की पूज्य भूमि को प्रणाम

स्वराष्ट्र की पूज्य भूमि को प्रणाम (सलाम), स्व-मातृभूमि को प्रणाम, स्वदेश की भूमि को प्रणाम, स्वजन्म-भूमि को प्रणाम।

सभी देशवासियों की माँ को प्रणाम, सभी देशवासियों की पालन-कर्त्री (धात्री) को प्रणाम, सभी को सब कुछ देने वाली को प्रणाम, सभी की पूज्य देवी को प्रणाम।

जो सभी की वन्दनीय है, जो सभी की पूज्य है, उसका यश निस्सन्देह सदैव गाने योग्य है।

तां नमामि प्रियां देवदेवस्य वै।
धारयामि स्वके मानसे मातरम्।।

तज्जलं तत्फलं तत्सदन्नं महत्।
पालकं कारकं जीवनस्यास्ति वै।।

तत्स्थले खेलनं, तज्जले क्रीडनं।
सर्वसौख्यप्रदं, दुःखमुक्तिप्रदम्।।

देवाधिदेव परमेश्वर की प्रिय उस मातृभूमि को प्रणाम। उस माँ को मानस में, अपने चित्त में, धारण करता हूँ।

उसका जल, उसका फल, उसका अत्यन्त सुस्वादु अन्न हमारे जीवन का कारक है एवं उसका पालक भी।

उसके स्थल-उसकी जगह-में खेलना, उसके जल में क्रीडा करना सारे सुखों को देने वाला है और सारे दुःखों से मुक्ति (छुटकारा) भी।

## मदीयः प्रियो भारताख्यः स्वदेशः

(१)

उदीच्यां हिमाद्रिः सदा रक्षकोऽस्ति
सदा दक्षिणस्यां महासागरश्च।
समस्तांश्च शत्रून् पराभूय भूमौ
स्वयं राजते वीतचिन्तो दिशासु।।

परं धार्मिकोऽयं पुराकालतो वै
न तुल्योऽस्य देशः कदाचिद्बभूव।
कथं तर्हि कश्चिल्लभेताधिकत्व-
मतोऽस्यास्ति वैशिष्ट्यवत्त्वं सदैव।।

## हमारा प्यारा भारत-देश

(१)

उत्तर दिशा में स्थित हिमालय उत्तर की ओर से इसकी सदैव रक्षा करता है, तथा दक्षिण दिशा में स्थित हिन्द महासागर दक्षिण की ओर से। एवं भारत सारी दिशाओं में स्थित अपने सारे शत्रुओं को पराजित करके, निश्चिन्त हो पृथ्वी पर विराजता है।

प्राचीन काल से ही यह देश परम धार्मिक रहा है। विश्व में इसके समान कभी भी कोई देश नहीं रहा। तो फिर कोई भी देश इससे बढ़कर कैसे हो सकता है? अतएव इसका सदैव अपना वैशिष्ट्य रहा।

अयोध्यानृपो रामचन्द्रोऽत्र जातः
समेषां नृपाणां सदादर्शभूतः।
प्रजापालको लोकसेवीदृशश्च
न तत्तुल्यतामेति विश्वे नृपोऽन्यः।।

असुरातङ्कैर्भीतानत्याचारैश्च रक्षसां व्यथितान्।
रक्षितुमरण्यवासान् रामोऽपि विचचार दण्डकान्[१]।।

अयोध्या-नरेश रामचन्द्र ने यहीं जन्म ग्रहण किया। वे विश्व के समस्त राजाओं के सदैव आदर्श रहे। वे प्रजा के ऐसे पालक तथा लोक के ऐसे सेवक थे कि विश्व में उनकी तुलना में आज तक दूसरा कोई भी नृपति नहीं आ सका।

असुरों के आतङ्कों से भयभीत एवं राक्षसों के अत्याचारों से पीडित वनवासी जनों की रक्षा के लिये राम (चौदहवर्ष तक) कण्टकाकीर्ण दण्डकारण्य में विचरण करते रहे, चक्कर लगाते फिरे।

---

१. देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति सप्तम्यर्थे द्वितीया। यथा रघुवंशे- लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्।...(३।८)।

(२)

हरिश्चन्द्रतुल्यो महान् सत्यवादी
नृपो नैव जातः समस्तेऽपि विश्वे।
वचःपालनार्थं नृपो रोहिताश्वं
स्वपुत्रं प्रियां चापि शैव्यां स्वराज्ञीम्।।

उपेक्ष्य स्वदायित्वनिर्वाहको वै
बभूवातिकाठिन्यमय्यां दशायाम्।
स्वजन्या भुवं भारतं धन्यतां यो
निनाय स्वयं चापि धन्यो बभूव।।

(२)

महाराज हरिश्चन्द्र के समान सत्यवादी-अपनी बात का पक्का-कोई नृपति समस्त विश्व में नहीं हुआ। अपने वचन का पालन करने के लिये महाराज ने अपने प्राणप्रिय एकमात्र पुत्र रोहिताश्व एवं पत्नी महारानी शैव्या के अपार कष्टों की उपेक्षा करते हुये बड़ी ही विकट परिस्थिति में अपने कर्तव्य का पालन किया। उन्होंने अपने जन्म से भारत की भूमि को धन्य बना दिया एवं स्वयं भी धन्य हो गये।

(३)

बलिर्दानिमान्यो महासत्त्व आसीत्
स्ववाग्रक्षणार्थं समस्तामिलां सः।
ददौ वामनाय स्वयं वै गतोऽधः
न दुःखं न तापो मनस्यस्य कश्चित्।।

कथाः पापहारिण्य एता अथान्या
मनस्तापहारिण्य इत्यत्र कोऽपि।
न सन्देहलेशोऽस्ति गृह्णातु लोको
वयं तर्हि धन्या ध्रुवं सत्यमेतत्।।

मदीयः प्रियो भारताख्यः स्वदेशः।

( ३ )

दानियों में श्रेष्ठ, महा पराक्रमी असुरराज बलि ने भगवान वामन को दिये गये अपने वचन के पालनार्थ सारी पृथ्वी (तीनों लोक) उन्हें समर्पित कर दी और स्वयं (गुरु शुक्राचार्य के शाप से) सुतल नामक अधो लोक चले गये, तथापि उनके मन में न दुःख था और न ही कोई सन्ताप।

ये तथा अन्य कथायें पाप, एवं मन का दुःख दूर करने वाली हैं। इसमें तनिक भी सन्देह नहीं, इसे सारा लोक जान ले। तो इन महापुरुषों के इस भारतवर्ष के निवासी हम भारतीय धन्य हैं, यह ध्रुव सत्य है।



यह है अपना प्यारा देश 'भारत'।

## समुन्नतराष्ट्रस्य लक्षणम्

कस्यापि राष्ट्रस्य समुन्नतस्य
त्रीण्येव तत्त्वानि भवन्ति चिह्नम्।
तेषु स्वजातेरभिमान एकं
पूर्वोपलब्धिष्वभिजातहेतुः ॥

सम्भूयकारित्वमशेषजाते-
रैक्यं च तस्या अपि लक्षणे वै।
एवंविधं राष्ट्रमशेषराष्ट्रे-
ष्वौन्नत्यभाग्निश्चितमेव नित्यम्॥

## विकसित राष्ट्र के लक्षण

किसी भी राष्ट्र के समुन्नत होने के तीन ही तत्त्व लक्षण होते हैं। उनमें से एक तो है-पूर्व उपलब्धियों की श्रेष्ठता से उत्पन्न स्वजातीय अभिमान का भाव।

दूसरे और तीसरे तत्त्व क्रमशः समस्त जातिका इकट्ठा होकर किसी भी राष्ट्रीय महत्त्व के कार्य में लग जाना, एवं उसकी एकता। इस प्रकार का राष्ट्र विश्व के समस्त राष्ट्रों में अवश्यमेव नित्य उन्नति का अनुभव करता है।

## राष्ट्रस्य बलवत्ता

बलं[१] सैन्यस्य पर्यायस्तेनैतत्संप्रतीयते।
अस्माकं पूर्वजाः सैन्यं बलं मुख्यं हि मेनिरे।।

यो हि देशो विपक्षिभ्यः स्वसीमारक्षणे क्षमः।
स एव बलवानस्ति वस्तुतो नात्र संशयः।।

अपि चान्नाद्यपेक्षां यो देशः पूरयितुं क्षमः।
परसाहाय्यं च विना, तस्यार्थे सुदृढा स्थितिः।।

## राष्ट्र की बलवत्ता

'बल' सेना का पर्याय है (संस्कृत भाषा में)। इससे यह प्रतीत होता है कि हमारे पूर्वज सेना को मुख्य बल मानते थे।

जो देश निश्चित रूप से अपने शत्रुओं से अपनी सीमा की रक्षा करने में समर्थ है, वही वस्तुतः बलवान् है। इसमें तनिक भी सन्देह नहीं है।

और भी; जो देश अन्न आदि की अपनी आवश्यकता को दूसरों की सहायता के विना ही पूरा करने में समर्थ है, उसकी आर्थिक स्थिति सुदृढ है (ऐसा समझना चाहिये)।

---

१. द्रष्टव्य गीता १।१०-अपर्याप्तं तदस्माकं बलं भीष्माभिराक्षितम्।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्।।

एवं द्विविधबलवान् देश एव बली मतः।
तमाक्रान्तुं न कस्यपि साहसं वर्तते ध्रुवम्।।

बलमाद्रियते बलिना नूनं न बलहीनता।
शक्तिद्वयेन सम्पन्नो देशोऽतो मान्यते समैः[१]।।

इस प्रकार सेना और वित्त, दोनों दृष्टियों से बलवान् राष्ट्र ही वस्तुतः बली होता है। निश्चित ही उस पर आक्रमण करने का साहस किसी भी राष्ट्र में नहीं होता।

बलवान् के द्वारा बल का ही आदर-सम्मान किया जाता है, निर्बलता या कमजोरी का नहीं। अतः द्विविध शक्ति से सम्पन्न देश ही सभी देशों के द्वारा सम्मान दिया जाता है।

---



१. सर्वैरित्यर्थः। अस्मिन्नर्थे 'सम' शब्दः सर्वनाम।

## राष्ट्रनिर्माणोपायाः

(१)

भारतमप्यस्माकं किमपि विशिष्टं विधातुं समर्थम्।
इतीदमग्रे जगतः प्रदर्शयितुमपेक्षाऽत्यधिका।।

साफल्योत्कृष्टत्वं स्प्रष्टुमना अप्यस्माकं देशः।
इति वार्तेयं प्रसरेदखिलेष्वपि भारतीयेषु।।

परन्त्वेतन्निमित्तं क्षेत्रेषु सर्वेष्वपि जीवनस्य।
अनुशासनं कठोरं व्यवहार्यं सर्वनागरिकैः।।

यादृशमननुशासनं देशे सर्वत्र वर्तते सम्प्रति।
तदपायार्थं नितरां निरङ्कुशं भवेद्धि शासनम्।।

## राष्ट्रनिर्माण के उपाय

(१)

हमारा भारतवर्ष भी कुछ विशेष करने में समर्थ है, इसे विश्व के समक्ष दिखलाने की आज विशेष अपेक्षा है।

हमारा देश भी सफलताओं की उत्कृष्टता छूने का इच्छुक है, यह बात समस्त भारतीयों में फैल जानी चाहिये।

परन्तु इसके लिये इस बात की सख्त जरूरत है कि देश के सभी निवासी जीवन के समस्त क्षेत्रों में कठोर अनुशासन व्यवहार में लायें।

आज देश में जिस प्रकार की अनुशासनहीनता सर्वत्र वर्तमान है, उसे दूर करने के लिये हमारे शासन को, हमारी सरकार को अत्यन्त कठोर होना पड़ेगा, निरङ्कुश होना पड़ेगा।

(२)

कस्यापि राष्ट्रस्य विकासहेतुः
क्षेत्रेषु सर्वेष्वपि जीवनस्य।
आचारशौचं, तदु रक्षणीयं
तदेव नित्यं नितरां च सम्यक्।।

सर्वेषु शौचेषु परं प्रधानं
मन्वादिभिश्चर्चितमर्थशौचम्।
तस्माद्विहीनस्तु नितान्तनिन्द्यो
जनश्च राष्ट्रञ्च समग्रमेव।।

( २ )

किसी भी राष्ट्र के विकास का हेतु, जीवन के सभी क्षेत्रों में उसकी आचार-शुचिता है, उसका पवित्र आचार है। निश्चित रूप से उसी की रक्षा करनी चाहिये। वही सदैव सर्वाधिक अच्छी और समीचीन बात है।

समस्त शौचों-पवित्रताओं-में भी प्रधान या मुख्य शौच है मनु आदि स्मृतिकारों के द्वारा चर्चित अर्थ-शौच अर्थात् धन-विषयक पवित्रता। उससे रहित सभी लोग एवं राष्ट्र नितान्त निन्दंनीय हैं। मनुस्मृति में लिखा हुआ वचन इस प्रकार है-

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम्।
योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः।।

भ्रष्टस्य राज्यस्य कृतेऽपि सर्वे
विकासमार्गा अवरुद्धकल्पाः।
ततश्च हीनाचरणाद्विमुक्तिं
विना न मुक्तिर्निजदुर्दशायाः।।

ततश्च सत्याचरणानुशासने
अपेक्षिते राष्ट्रकृते हि सर्वथा।
यद्येतयोर्देशजना व्यवस्थिताः
समुन्नतिं राष्ट्रमवश्यमाप्नुयात्।।

भ्रष्ट राज्य के लिये विकास के सभी मार्ग प्रायः अवरुद्ध हो जाते हैं। इसलिये भ्रष्टाचार से विना मुक्त हुये, अपनी दुर्दशा से मुक्त होना, विकासाभाव से छुटकारा पाना कथमपि सम्भव नहीं।

अतः सत्य-पूत आचरण और अनुशासन राष्ट्र के विकास के लिये सर्वथा आवश्यक हैं, अपेक्षित हैं। यदि देशवासी इन दोनों में सुव्यवस्थित हो जायँ तो देश अवश्य ही समुन्नति प्राप्त करेगा। दुनियाँ की कोई भी ताकत इसे समुन्नत या विकसित होने से रोक नहीं पायेगी।

(३)

उद्योगशीलं खलु राष्ट्रमेव
समृद्धिशीलं भवतीह लोके।
स्वास्थ्यं विनोद्योगपरं च राष्ट्रं
कथं भवेदेव महासमस्या।।

आरोग्यहेतोर्महती व्यपेक्षा
शुद्धस्य पर्यावरणस्य चास्ति।
शुद्धस्य पर्यावरणस्य हेतो-
रारोपणीया वटपिप्पलाद्याः।।

पादपारोपणेनैव पर्यावरणरक्षणम्।
भूम्यन्तःस्थजलस्यापि रक्षणं सुशकं भवेत्।।

(३)

उद्योगशील राष्ट्र ही निश्चित रूप से इस पृथ्वीलोक में समृद्धिशाली होता है। किन्तु स्वास्थ्य के अभाव में कोई राष्ट्र उद्योगशील ही कैसे होगा, यह बड़ी समस्या है।

आरोग्य-स्वास्थ्य-के लिये शुद्ध (प्रदूषण-रहित) पर्यावरण की महती अपेक्षा होती है। एवं शुद्ध पर्यावरण के लिये बरगद, पीपल जैसे बड़े पेड़ लगाये जाने चाहिये।

वृक्ष लगाने से ही पर्यावरण सुरक्षित होगा। पर्यावरण-प्रदूषण की समस्या वृक्षारोपण से ही हल होगी। इससे जमीन के भीतर स्थित जल को भी सुरक्षित रखना आसान होगा।

विशेषतो वटाश्वत्थेत्यादीनां रोपणाद् ध्रुवम्।
जलस्य विपुलो राशिर्भूम्यन्तः संग्रहीष्यते।।

एवं समुत्थिततलं भूम्यन्तर्गतं जलम्।
ततश्चापोऽन्धुसरसां नैव यास्यन्ति शुष्कताम्।।

यावन्न पानादिकृतेऽत्यपेक्षिता,
आपो जनानां सुलभा भवेयुः।
तावद्धि सर्वा जनता मिलित्वा-
ऽवश्यं क्षुपारोपणतत्परा स्यात्।।

कच्चरावकरादेश्चेदुचितं स्यात् प्रबन्धनम्।
पर्यावरणशुद्धौ हि साह्यं तस्यापि निश्चितम्।।

विशेषतः वट, पीपल, पाकड़ आदि वृक्षों के आरोपण से विपुल जल-राशि भूमि के अन्दर संगृहीत-इकट्ठा-होगी।

इस प्रकार से भूमि के अन्दर स्थित जल का तल ऊपर आयेगा, नीचे नहीं जायगा। इससे कुओं और तालाबों इत्यादि का जल सुरक्षित रहेगा, वे सूखेंगे नहीं।

जब तक पीने, खेती की सिंचाई आदि के लिये सर्वथा अपेक्षित जल लोगों को सुलभ नहीं हो जाता, तब तक सारी जनता मिलकर वृक्षारोपण में तत्पर रहे, लगी रहे।

इसके अतिरिक्त यदि कूड़े-कचड़े का उचित प्रबन्धन हो तो पर्यावरण की शुद्धि में इसका भी महान् योगदान होगा।

(४)

राष्ट्रोचितेऽस्मिन् परमे च कार्ये
यूनां सहस्रस्य महोपयोगः।
तत्सेवया किन्न भवेद्धि शक्यं
देया ततोऽस्मा उचिता सुशिक्षा॥

अश्वत्थजम्बूवटपर्कटीनां
रोपो द्रुमापातन-रोधनं च।
आभ्यन्तरोपद्रवनाशनं च
स्वराष्ट्रसीमापरिरक्षणं च॥

एतानि कार्य्याणि महत्त्वपूर्णा-
न्यशिक्षितानामपि शिक्षणं च।
कार्यं, ततो ह्येषु नियोजनीयाः
शिष्टा युवानो निजराष्ट्रभक्ताः॥

(४)

राष्ट्र के इस महत्त्वपूर्ण निर्माण-कार्य में देश के सहस्रों नवयुवकों की, उनके सहयोग की बड़ी उपयोगिता है। उनके सहयोग से क्या नहीं हो सकता ? हाँ, उसके लिये उन्हें समुचित-सही उत्तम शिक्षा दी जानी चाहिये।

पीपल, जामुन, बरगद, पाकड़ इत्यादि के पौधों का रोपण, (हरे) पेड़ों की कटाई की रोक, देश की सीमाओं के भीतर होने वाले उपद्रवों की समाप्ति एवं स्वदेश की सीमाओं की रक्षा इत्यादि।

ये सारे कार्य तो महत्त्वपूर्ण हैं ही, अशिक्षितों को शिक्षित बनाने का भी बड़ा कार्य है। तो फिर इनमें अनुशासित, राष्ट्रभक्त युवकों को लगाया जाना चाहिये।

तारुण्ययुक्तेषु च राष्ट्रभावः
प्रपूरणीयः सुतरां प्रयासैः।
'दत्त्वा च प्राणानपि मातृभूमे-
र्मानः सुरक्ष्यः सुतरां सुवीराः!!

वन्द्याऽस्मदीया खलु मातृभूमि-
स्तद्रक्षणे वीरवरैर्भवद्भिः।
कृतस्य शौर्यस्य पवित्रगाथाः,
सदैव गास्यन्ति जनाश्च लोके'।।

तरुण युवकों में प्रयासपूर्वक राष्ट्रियता की भावना कूट-कूट कर भरी जानी चाहिये-'परमवीर युवकों! अपने प्राणों की आहुति देकर भी मातृभूमि के सम्मान की पूर्ण रक्षा की जानी चाहिये।

हमारी मातृभूमि निस्सन्देह सभी के लिये वन्दनीय है। अतः उसकी रक्षा में आप वीर-वरों द्वारा किये जाने वाले शौर्य की पवित्र गाथायें लोक में सदैव गायी जाती रहेंगी'।

(५)

वायुर्विशुद्धः प्रचुरा च वृष्टि-
मृद्रक्षणं पादपकार्यमेव।
विकारिपर्यावरणस्य शुद्धौ
वृक्षाः सहाया नहि केचिदन्ये॥

जलं यदि स्याज्जगतोऽस्य जीवनं
श्वासो द्रुमोऽस्तीत्यपि निश्चितं हि।
जलं विना नैव हि जीवनं यदि
वायुं विना तन्नितरां नहि स्यात्॥

(५)

विशुद्ध हवा, प्रभूत वर्षा, उपजाऊ मिट्टी का संरक्षण—यह सब कुछ वृक्षों का ही कार्य है। प्रदूषित पर्यावरण की शुद्धि भी वृक्षों के ही सहारे सम्भव है, किसी अन्य के नहीं।

जल यदि जगत् का जीवन[१] है तो वृक्ष उसकी सांस (श्वास वायु) है, यह भी निश्चित है। यदि जल के बिना जीवन सम्भव नहीं तो वायु के विना तो वह एक क्षण के लिये भी बिलकुल ही सम्भव नहीं है।

१. संस्कृत में जल का एक नाम 'जीवन' भी है- '...जीवनं जलम्' अमरकोश।

सुषुप्तिर्नैव जागर्या सर्वथाऽपेक्ष्यते सदा।
सर्वेभ्यो देशवासिभ्यो राष्ट्रसंरक्षणाय हि।।

अतः सुषुप्तिं त्यक्त्वा जागरुकाश्च सर्वथा।
अस्मद्राष्ट्रप्रहरिणो भवेयुरिति काङ्क्ष्यते।।

राष्ट्र के संरक्षण, उसकी सुरक्षा के लिये सारे देशवासियों से सब प्रकार से जागरूकता की अपेक्षा है, सुषुप्ति की कदापि नहीं।

अतः हमारे राष्ट्र-प्रहरी सुषुप्ति का त्याग करके सब प्रकार से जागरूक रहें, यही आकाङ्क्षा है।

## उद्बोधनम्

(१)

पथिक ! निरन्तरचलनमभीष्टं
गन्तव्यं प्रति सततं चलनम्
अपि पारे गन्तव्यं चलनम्।
नित्यं सततं चलनं धर्मः
नैव विरामोऽभीष्टः कथमपि।।

'चरन् वै मधु विन्दति' पान्थ!
'चरैवे'ति वचनं च श्रौतम्।
तस्मात् सङ्गे सार्धं सर्वं
नीत्वा सततं चलनं धर्मो
मध्ये नैव विरामोऽभीष्टः।।

## उद्बोधन

(१)

जीवन-पथ के पथिक ! विना रुके चलते रहना ही अभीष्ट है, गन्तव्य या मञ्जिल की ओर सतत चलना, मञ्जिल के पार भी चलते रहना, एवं कभी विराम की बात न सोचना, किसी भी तरह से विराम न चाहना ही तुम्हारा धर्म है।

राही ! 'नित्य निरन्तर गतिशील व्यक्ति ही जीवन का मधु अर्थात् उत्तम सुरस-सुस्वादु फल प्राप्त करता है', 'निरन्तर चलते रहो' ऐसा श्रुतियाँ भी कहती हैं। अतः सभी सङ्गी-साथियों के साथ निरन्तर जीवन-पथ पर आगे बढ़ते रहना एवं बीच में लाख विघ्न-बाधा आने पर भी न रुकना ही तुम्हारा अभीष्ट धर्म है।

आह्वानं जीवनयात्राया
'अग्रे प्रगतावस्ति विकासः
मङ्गलमयोल्लास-परिपूर्णः।
आशाशंसा-भरितः[1] समयो
वत्स्र्यति, तत्र नैव नैराश्यम्।।

आशा दीपो मार्गदर्शकः
विश्वासः श्रयणीयः स्तम्भः।
साफल्यस्याशा-विश्वासः
पलाययेत् नैराश्यं सर्वं
यथा रविर्निविडं सन्तमसम्'।।

तुम्हारे लिये जीवन-यात्रा का यह आह्वान है, यह सन्देश (पैगाम) है कि 'आगे चलते रहने में ही जीवन का मङ्गलमय एवं उल्लासपूर्ण विकास (प्रगति) निहित है। उसी से आशा और आशंसा के अतिशय से, उसकी बाढ से युक्त समय आवेगा जिसमें निराशा कहीं नहीं मिलेगी।

आशा ही जीवनपथ का प्रदर्शक दीप है, विश्वास ही उसका आश्रयणीय अर्थात् सहारा लेने योग्य सुदृढ स्तम्भ है। सफलता या सिद्धि की आशा और उसका दृढ़ विश्वास जीवन की सारी निराशाओं को उसी प्रकार दूर भगा देगा जैसे सूर्य अपनी प्रखर किरणों से चारों ओर छाये घनघोर अन्धकार को'।

१. भरित इति शब्दः भरोऽतिशयो जातोऽस्येत्यर्थे साधुः इतच्-प्रत्ययान्तः। भृधातोरप्-प्रत्ययान्तो भर-शब्दोऽतिशयार्थकः, भारशब्दश्च घञ्-प्रत्ययान्तः गुरुत्वबोधकः। भृधातोः क्तप्रत्ययान्तः शब्दः 'भृत' इति।

यात्रायाः प्रारम्भः साहसेनैव न चान्यथा शक्यः।
परिपूर्णता च तस्याः सततोद्योग[1] एव [2]नोऽन्यथा॥

किसी भी यात्रा का प्रारम्भ साहस से ही होता है, किसी अन्य प्रकार से नहीं। और उसकी पूर्णता सतत-निरन्तर 'उद्योग' अर्थात् उससे उत्कृष्ट योग या जुड़ाव होने पर ही, उसमें संलग्न रहने पर ही, उसे त्याग न देने पर ही होती है।

१. 'उद्योगे' उत्कृष्टे योगे सम्बन्धे इत्यर्थः।
२. 'नो' इत्यपि निषेधार्थकमव्ययपदम्।

(२)

समक्षं प्रवातस्य यात्रिन्! स्थितेन
त्वयाह्वानमुच्चस्वरेणैव कार्यम्।
अरेवातुल! त्वं न जानासि तत्त्वं
न मन्मार्गरोधे कथञ्चित्क्षमोऽसि।।

यतोऽयं दृढो निश्चयो मामकीनः
कथञ्चिद् गमिष्यामि पारं पथोऽहम्।
ततो लक्ष्यमत्यन्तसिद्धं भवेद्धि
तथाऽनन्दलाभो भवेत्संशयो नो।।

(२)

पान्थ! जीवन के आँधी-तूफानों के समक्ष सीना तान खड़े होकर उसे ऊँचे स्वर में इस प्रकार चुनौती देना कि रे दुराग्रही प्रभञ्जन! ओ सिरफिरे तूफान! तुम यह बात अच्छी तरह से समझ लो कि मेरे आगे बढ़ने में चाहे जितने रोड़े अटका लो, मैं तो रास्ते के पार, उसके गन्तव्य तक जाऊँगा ही जाऊँगा। यह मेरा दृढ़ निश्चय है। तुम मेरा रास्ता रोक नहीं पाओगे।

चूँकि यह मेरा दृढ़ निश्चय है कि मैं किसी न किसी तरह से रास्ते के अन्त तक जाऊँगा ही, अतः मेरा लक्ष्य पूर्ण रूप से सिद्ध होगा; और उससे मुझे आनन्द की प्राप्ति होगी ही, इसमें तनिक भी संशय या सन्देह नहीं है। (किसी शायर ने ठीक ही फरमाया है कि-'कदम चूम लेती हैं बढ़ करके मंजिलें, मुसाफिर अगर अपनी हिम्मत न हारे')।

(३)

धारायाः प्रातिकूल्येऽस्ति वीर्यं नौपरिचालने।
आनुकूल्ये तु धारायाः किं वीर्यं किञ्च पौरुषम्।।

लक्ष्यमेवानुसर्तव्यं काठिन्यादौ च कण्टके।
तत्तु नैव परित्याज्यं तत्प्राप्तिः सुशका तथा।।

जीवनपथे सहस्रं काठिन्यानि तु भयानकान्यासन्।
सङ्घर्षाय सज्जितस्तदैव तान्यदृश्यान्यासन्।।

(३)

धारा के प्रतिकूल (उल्टे) नौका खेने में बहादुरी जरूर है, किन्तु उसके अनुकूल (साथ-साथ) खेने में क्या बहादुरी और क्या पौरुष?

काठिन्य-कण्टकों के होने पर भी लक्ष्य का अनुसरण करना चाहिये, उसका पीछा कदापि नहीं छोड़ना चाहिये। ऐसा करने पर लक्ष्य की प्राप्ति अवश्य ही आसान हो जायगी।

जिन्दगी की राह में तो भयानक कठिनाइयाँ हजारों थीं। पर जब उनसे भिड़ने-जूझने को तैयार हो गया तो वे सब गायब हो गईं-

'मुश्किलें हज़ार थीं राहे जिन्दगी में।
जूझने को तैयार हुआ तो सब गायब हो चलीं।।'

(स्वरचित)

(४)

जीवने दृढविश्वासो भवति श्वासकारणात्।
यावच्छरीरे श्वासस्तावदेव हि जीवनम्।।

जीवनं श्वासमूलं हि श्वासो विश्वासकारणम्।
आ-श्वासं पुरुषः कुर्याद्योगं विश्वासपूर्वकम्।।

(४)

जीवन में विश्वास का कारण श्वास है। शरीर में जब तक साँस है, तभी तक जीवन है। साँस ही जीवन की जड़ है, और साँस ही विश्वास का कारण है। अतः जब तक शरीर में साँस रहे तब तक मनुष्य को विश्वास-पूर्वक 'योग' अर्थात् अप्राप्त की प्राप्ति का उपाय करते रहना चाहिये, उद्योग से मुँह नहीं मोड़ना चाहिये।

## महत्त्वाकाङ्क्षा

(१)

सर्वस्य लोकस्य हि कार्यशक्ते-
र्बुद्धेश्च सीमा भवतीति सत्यम्।
तस्यानुसारेण कृता महत्त्वा-
काङ्क्षैव सीमासहिता प्रसिद्धा।।

सीमान्विता शक्त्यनुसारिणी या-
ऽकाङ्क्षा हि मर्यादितनामधृत् सा।
बुद्धिक्रियाशक्त्युभयानुसारे-
णापूरिता सिद्ध्यति शीघ्रमेव।।

कालक्रमेणैव द्वयोर्विकासो
जानाति लोकोऽखिल एव तथ्यम्।
कालाच्च पूर्वं क्रियमाणकाङ्क्षा
सिद्धिं न चाप्नोति ददाति दुःखम्।।

## महत्त्वाकाङ्क्षा

(१)

सभी लोगों की बुद्धि और परिश्रम करने की शक्ति एक सीमा तक ही होती है। उसी के अनुसार की गई महत्त्वाकाङ्क्षा सीमित मानी जाती है।

यह शक्त्यनुसारिणी महत्त्वाकाङ्क्षा ही 'मर्यादित' नाम से भी कही जाती है। बुद्धि और परिश्रम की शक्ति से आपूरित होने से यह शीघ्र ही सफल होती है।

सारे लोग इस तथ्य को जानते हैं कि बुद्धि एवं परिश्रम-शक्ति का विकास काल-क्रम से ही होता है, कालापेक्षी होता है। अतः काल से पूर्व (अकाले) की गई महत्त्वाकाङ्क्षा सफल नहीं होती, प्रत्युत दुःख देती है।

(२)

न निन्दनीया हि महत्त्वकाङ्क्षा
सा चेन्न सीमारहिता कदापि।
परं यदोत्क्रामति सा हि सीमां
नूनं तदानर्थकरीति निन्द्या॥

मर्यादिता महत्त्वा-
काङ्क्षैव सर्वदा सफलीभवति।
तस्या निश्चयसहितो-
द्योगेनैव यदि योगः स्यात्॥

(२)

महत्त्वाकाङ्क्षा यदि अपनी शक्ति एवं साधनों की सीमा के भीतर हो तो कदापि निन्दनीय नहीं प्रत्युत प्रशंसनीय है, (क्योंकि प्रगति के लिये तो लक्ष्य उच्च होना ही चाहिये)। किन्तु जब वह सीमा पार कर जाती है, तब निश्चित ही अनर्थ- त्रासदी-का कारण बनती है, अतः निन्दनीय है।

मर्यादित महत्त्वाकाङ्क्षा ही सफल होती है। शर्त इतनी भर है कि उसे निश्चयपूर्वक उद्योग से युक्त होना चाहिये।

# कार्यसिद्धेर्हेतवः

## तपो हि दुरतिक्रमम्

(१)

कृतेऽपि यत्ने यदि नैव सिद्धा
पूर्वं समृद्धिर्न भवेन्निराशः।
नात्माऽवमन्येत कृते हि तस्य
आमृत्यु यत्नः करणीय एव।।

# कार्य की सिद्धि के हेतु

## तप

( १ )

यदि पूर्व समय में यत्न करने पर भी समृद्धि नहीं प्राप्त हुई तो उससे निराश नहीं होना चाहिये। उसके लिये अपने विषय में हीन भावना नहीं लानी चाहिये, उसके कारण यह नहीं सोचना चाहिये कि मैं किसी लायक नहीं हूँ और कुछ भी नहीं कर सकता। प्रत्युत मृत्युपर्यन्त निरन्तर प्रयत्न करते रहना चाहिये।

यद्दुष्करं यच्च दुरापमेव
यद्दुर्लभं यच्च भवेदसाध्यम्।
समं[1] हि सिद्ध्येत्तपसा बलीयसा
तपोऽस्ति सत्यं दुरतिक्रमं सखे!!

ऐकाग्र्यमत्युत्तमसाधनं हि
चित्तस्य लक्ष्यं प्रति, वेद्यमेतत्।
ततो बलीयो न तपोऽस्ति किञ्चि-
ल्लक्ष्यस्य सिद्ध्यै खलु सत्यमेतत्।।

जो करने में कठिन हो, जो पहुँच के बाहर हो, जो दुर्लभ हो और जो असाध्य हो, वह सभी बलवत्तर तप से सिद्ध हो जाता है। तप तो मित्र! सचमुच दुरतिक्रम है, उसका अतिक्रम या उल्लङ्घन कोई भी नहीं कर सकता।

लक्ष्य के प्रति चित्त की एकाग्रता सबसे उत्कृष्ट साधन है, यह ज्ञातव्य तथ्य है। लक्ष्य की प्राप्ति के लिये उससे बलवत्तर कोई तप नहीं है, यह ध्रुव सत्य है।

१. समम् सर्वमित्यर्थः।

## पौरुषम्

(२)

शुभे सत्यपि प्रारब्धे पौरुषं कार्यमेव हि।
पुरुषार्थं विनाऽभीष्टं कथञ्चिन्नैव सिध्यति।।

प्रतिकूले हि प्रारब्धे उत्कृष्टमपि पौरुषम्।
वैकल्यं भजतेऽवश्यं तस्मिन् काले न संशयः।।

तथापि पौरुषे लग्नः पूर्ववत् यत्नपूर्वकम्।
आनुकूल्ये च कालस्य कार्यसिद्धिं लभेत हि।।

## पुरुषार्थ

( २ )

अच्छा प्रारब्ध होने पर भी पुरुष को पुरुषार्थ तो करना ही चाहिये। उसके विना अभीष्ट की सिद्धि किसी भी प्रकार से सम्भव नहीं।

प्रारब्ध के प्रतिकूल (खराब) होने पर तो उत्कृष्ट भी पौरुष निश्चित ही विफल हो जाता है, कम से कम उस समय तो सफल नहीं ही होता। [हाँ, वह कभी नष्ट नहीं होता]।

अतः खराब प्रारब्ध होने पर जब पुरुषार्थ (कर्म, उद्योग) विफल हो जाय, तब भी पुरुष को पूर्ववत् धैर्यपूर्वक उसे करते रहना चाहिये। समय के अनुकूल होते ही कार्य अवश्य ही सिद्ध होगा।

अस्यां वस्तुस्थितौ सत्यां प्रारब्धपुरुषार्थयोः।
कश्चिन्नैव विरोधोऽस्ति सामञ्जस्यं हि वर्तते।।

चरैवेति वचः श्रौतं स्मर्तव्यं ह्यारुरुक्षिभिः।
गृहे शयानस्य भगः शेतेऽभीष्टं न सेत्स्यति।।

दक्षिणेन हि हस्तेन कर्म कार्यं निरन्तरम्।
आहितं तत्फलं सव्ये ज्ञातव्यं नेह संशयः।।

ऐसी वस्तु-स्थिति होने पर प्रारब्ध और पुरुषार्थ में परस्पर विरोध कहाँ है? निश्चित रूप से दोनों में सामञ्जस्य है, समन्वय है।

ऊँचे पद पर पहुँचने के इच्छुक व्यक्ति को श्रुति का 'चरैवेति' वचन सदैव स्मरण रखना चाहिये। घर के भीतर सोते रहते हुये व्यक्ति का भाग्य भी सोता रहता है। ऐसे व्यक्ति का अभीष्ट कभी सिद्ध नहीं होगा।

दाहिने हाथ से नित्य-निरन्तर कर्म करते रहना चाहिये। उसका फल बायें हाथ में रखा हुआ है, ऐसा समझना चाहिये। इसमें सन्देह नहीं ('कृतं मे दक्षिणे हस्ते फलं मे सव्य अहितम्')।

## धैर्यम्

(३)

धैर्यावलम्बिनामेव सन्मार्गस्यानुसारिणाम्।
अवश्यम्भाविनी सिद्धिः संशयावसरः कुतः??

इन्द्रो युधिष्ठिराद्याश्च स्वं राज्यमाप्नुवंस्तथा।
दुर्योधनश्च नहुषः स्वपापैर्नाशमाप्नुताम्।।

दुर्योधनो दुराराध्यो विरुणद्धि स्म पाण्डवान्।
दुराशयात् कदाचारे संलग्नः स सदैव हि।।

## धैर्य

( ३ )

धैर्य का अवलम्बन लेने वाले सन्मार्गानुयायी व्यक्ति की कार्य-सिद्धि अवश्यमेव होती है, इसमें सन्देह नहीं।

धैर्य से अनुकूल समय की प्रतीक्षा करते हुये देवराज इन्द्र एवं महाराज युधिष्ठिर आदि ने अपना-अपना खोया हुआ राज्य पा लिया। इसके विपरीत नहुष और दुर्योधन आदि अपने पाप-कर्मों से नाश को प्राप्त हो गये।

दुराराध्य दुर्योधन ने पाण्डवों का विरोध किया। वह अपने दुर्भाव के कारण सदैव कुत्सित आचरण में लगा रहा।

इन्द्रत्व-प्राप्त्या नहुषो जातगर्वो दुराशयात्।
इन्द्राणीं चकमे, तस्मै शिविकामृषयोऽवहन्॥

कामान्धेन पदा स्पृष्टोऽगस्त्यः क्रुद्धः शशाप तम्।
तेनाजगरयोनिं सः प्राप भूतलमागतः॥

नहुष भी इन्द्र-पद प्राप्त करने के कारण उत्पन्न दुर्भाव से गर्वयुक्त होकर इन्द्राणी को चाहने लगा। उसके लिए ऋषियों ने पालकी ढोई।

कामान्ध उसके द्वारा पैर से छू जाने के कारण क्रुद्ध अगस्त्य ऋषि से शाप पाकर नीचे पृथ्वी पर आ गिरा और अजगर की योनि प्राप्त कर ली।

## दृढनिश्चयः

(४)

संशयग्रस्तचित्तैस्तु किं कर्तुं शक्यते नरैः।
अतः संशयनिर्मुक्ताः कार्यं कुर्युर्मनीषिणः।।

संशयग्रस्तचित्तास्तु कर्महीना यतो नराः।
अतस्तेषां विनाशोऽपि ध्रुव इत्याह मापतिः।।

लङ्कागमनस्य कृते कृतनिश्चयस्य हनुमतः समक्षम्।
सिन्धुः कुल्या-तुल्यः सुखेन ननु तार्यो बभूव ह।।

## दृढ निश्चय

(४)

संशय में पड़े हुये लोग कुछ भी नहीं कर सकते। मनीषी पुरुष संशय से मुक्त होकर निश्चय-पूर्वक ही कोई कार्य करते हैं।

चूँकि संशय-ग्रस्त लोग कर्म-हीन होते हैं, अतः उनका विनाश निश्चित है। लक्ष्मीपति भगवान् श्रीकृष्ण जी ने भी श्रीमद्भगवद्गीता में अर्जुन से 'संशयात्मा विनश्यति' कह कर यही तथ्य उद्घाटित किया है।

लङ्का जाने के लिये कृतनिश्चय हनुमान् जी के समक्ष समुद्र भी छोटी नहर के समान सुखपूर्वक पार करने योग्य हो गया।

शत्रुविरुद्धं युद्धं जेतुं कृतनिश्चयः पृथापुत्रः।
युद्धे प्रसाद्य गिरिशं तदमोघं लब्धवानस्त्रम्॥

तेनैव महाभारत-युद्धं जित्वा परां कीर्तिमवाप।
भगवत्कृष्णस्य कृपा तत्र ननु विशेषहेतुरभूत्॥

किमपि साफल्यमाप्तुं तस्मिन्निष्ठा तज्जातोद्योगः।
अपि चानुकूलदैवं सर्वमेवापेक्ष्यते सदा॥

अपि चासाधुभिर्जनैर्योगः सर्वथैव परिहरणीयः।
असाधुयोगः सिद्धेर्ह्यन्तरायोऽस्त्यापदां पदम्॥

शत्रुओं के विरुद्ध युद्ध जीतने के लिये कृत-निश्चय कुन्ती-पुत्र अर्जुन ने भगवान् शिव को युद्ध में प्रसन्न करके उनका अमोघ पाशुपतास्त्र प्राप्त किया।

उसी अस्त्र के द्वारा उन्होंने महाभारत युद्ध में विजय प्राप्त करके महान् यश अर्जित किया। हाँ, उसमें निस्सन्देह विशेष हेतु बना भगवान् श्रीकृष्ण का अनुग्रह।

किसी भी कार्य में सफलता प्राप्त करने के लिये उसमें निष्ठा, उस निष्ठा से उत्पन्न उद्योग, और साथ ही अनुकूल दैव अर्थात् प्रारब्ध, सभी कुछ अपेक्षित होता है।

साथ ही, इस सफलता के लिये दुष्ट जनों का संग (साथ) सर्वथा परित्याज्य है। दुर्जन का संग निश्चित ही कार्य-सिद्धि में महान् विघ्न होता है। उससे कर्ता को अनेक आपदायें प्राप्त होती हैं।

# सन्नीतयः

## नितयः

(१)

जलेन हीनः कूपोऽन्धो विवेकेन नरस्तथा।
अन्धकूपो हिनस्त्यन्यमपि चात्मानमन्धधीः॥

आभाहीना मुक्ता नरोऽप्रत्येयो मानहीनश्च।
अम्भोहीना च सुधा त्रयोऽपि विनष्टा मन्यन्ताम्॥

# सन्नीतियाँ

## नीतियाँ

(१)

जल से हीन कुआँ अन्धा होता है, उसमें कुछ भी दिखाई नहीं पड़ता। विवेक से हीन मनुष्य भी अन्धा होता है। उसे भी अच्छे-बुरे का कुछ भी अन्तर (भेद) नहीं सूझता। अन्धकूप तो दूसरों को ही नष्ट करता है किन्तु विवेकहीन अर्थात् अविवेकान्ध तो स्वयं को भी नष्ट कर देता है (अन्यों को तो करता ही है)।

बिना पानी (आप-आब अर्थात् आभा, चमक) का मोती, अविश्वसनीय होने के कारण मान-मर्यादा से रहित (बे-पानी) मनुष्य तथा बिना पानी का चूना-ये तीनों ही बर्बाद (नष्ट) समझे जाने चाहिये। रहीम ने ठीक ही कहा है-

'रहिमन पानी राखिये बिन पानी सब सून।
पानी गये न ऊबरै मोती मानुस चून'।

न सख्यं नापि वैरं वा सार्धं कार्यमसाधुभिः।
दिनानुदिनमप्येते सर्वथा दुःखदातृणी।।

दुःखं परं कष्टकरं प्रकामं
स्निग्धो जनो भाजयतीह चेत्तत्।
सह्या तदा तस्य हि वेदना स्यात्
विचार्य तन्निश्चिनुयात् स्वकृत्यम्।।

दुर्जनों के साथ न दोस्ती करना ठीक है, न ही दुश्मनी। ये दोनों ही दिन-प्रतिदिन सर्वथा दुःखदायी ही सिद्ध होती हैं।

दुःख चाहे जितना भी परम कष्टकारी हो किन्तु यदि स्नेही जन उसे बाँट लें तो निश्चित रूप से उसकी अनुभूति कम हो जायगी, सह्य हो जायगी। ऐसा विचार करके ही विवेकी व्यक्ति को स्वकृत्य का निश्चय करना चाहिये। दूसरों के दुःख में सहभागी होना धर्म है, कर्त्तव्य है।

## दुर्जनस्य नतिर्दुःखदा

(२)

दुश्शीलनीचपुरुषस्य नतिर्न सत्या
साापि प्रदर्शनकृते क्रियतेऽर्थसिद्ध्यै।
स्वार्थे गते पुनरसौ रसहीनवृत्तो
दुःखाकरो[1]त्यतितरां खलु शीलवन्तम्।।

दुष्टो जनो यदि न छन्दनकर्मणा हि
कार्यं काथञ्चिदपि कारयितुं क्षमोऽस्ति।
तर्हि प्रदर्शयति दण्डभयादिकं सः
तेनापि साधयितुमिच्छति कार्यमेव।।

## नवनि नीच की अति दुःखदाई

( २ )

दुश्शील नीच पुरुष की विनम्रता (उसका नीचे झुकना) वास्तविक नहीं होती। वह तो दिखाने के लिये, वह भी स्वार्थ की सिद्धि होने तक, ऊपर-ऊपर से की जाती है। स्वार्थ न रह जाने पर, कार्य निकल जाने पर दुष्ट व्यक्ति फिर नीरस व्यवहार करता हुआ, शीलवान् पुरुष को स्वकीय प्रतिकूल (विरोधी) आचरण से अधिकाधिक दुःख ही देता है-'नवनि नीच की अति दुखदायी' (रामचरितमानस)।

दुष्ट व्यक्ति यदि अपनी मीठी बातों (ठकुरसुहाती) से अपना कार्य करवाने में किसी भी प्रकार से समर्थ नहीं होता, तो वह दण्ड-भय का प्रदर्शन करता है, दण्ड का भय दिखलाता है। इस प्रकार से भी वह अपना कार्य साधने की इच्छा करता है।

---



१. दुःखात् प्रातिलोम्ये (डाच्) ५।४।६४।

तस्माद्धिवेकिपुरुषः सुविचार्य पात्रं
तच्छक्यकार्यसहयोगपरो ध्रुवं स्यात्।
भ्राम्येन्न दुष्टजनछन्दनदण्डकार्यैः
पश्चान्न तापकरणे विवशो यतः स्यात्।।

इसलिये विवेकी पुरुष को चाहिये कि व्यक्ति की पात्रता को अच्छी तरह परख कर ही उसके होने लायक कार्य में सहयोग दे। उसे निश्चित ही किसी दुष्ट व्यक्ति की सुहावनी मीठी-मीठी बातों, तथा दण्ड-भय के प्रदर्शन इत्यादि से भ्रान्त नहीं होना चाहिये ताकि उसे पश्चात्ताप करने के लिये विवश न होना पड़े।

(३)

न ब्रुवन् परुषवचनं, न च कदाप्यर्चयञनानसाधून्।
पुरुषो रोचतेऽत्रैव परत्रापि न संशयः कोऽपि।।

यद्वस्तु देहवद्भिर्यावदपेक्ष्यते लोकयात्रायै।
तावति स्वत्वं तेषां ततोऽधिकेऽधिकारोऽनुचितः।।

शाश्वतीदं हि नीतिः सर्वैः सदैव परिपालनीयास्ति।
एवं पारस्परिकः कलिः समूलो ध्रुवं नङ्क्ष्यति।।

( ३ )

इसमें कोई संशय नहीं कि कठोर वचन न बोलने वाला तथा दुर्जनों का सम्मान न करने वाला पुरुष पहले तो यहीं और बाद में परलोक में भी प्रकाशित होता है।

जीवन निर्वाह के लिये प्राणियों को जो वस्तु जितनी अपेक्षित होती है, उतनी पर ही उनका अधिकार (कब्जा) उचित है, उससे अधिक पर अनुचित।

यही (इदम्) शाश्वत सनातन नीति है जो सभी के द्वारा सदैव सर्वथा पालनीय है। ऐसा करने से सारा पारस्परिक संघर्ष, कलह इत्यादि निश्चित ही समूल नष्ट हो जायेगा।

## विनीतः स्यान्न गर्वितः

(४)

लोको विनम्रमुत्थापयति स्वयं हि,
दृप्तं समूलमुन्मूलयतीति सत्यम्।
वायुर्निपातयत्युच्छ्रिखपादपं हि,
नासौ कदापि शष्पं विनतं विनम्रम्।।

यज्ञं च दानं च तपश्च धर्मं
परोपकारादि च पुण्यकार्यम्।
कृत्वा मनुष्यो यदि गर्वितः स्या-
त्ततो हि भद्रः खलु पापकर्मा।।

## विनीत होना चाहिंये, गर्वित कदापि नहीं

(४)

विनम्र व्यक्ति को तो लोग अपने-आप उठा देते हैं और अहङ्कारी (घमण्डी) को तो जड़-सहित उखाड़ फेंकते हैं। यह सर्वथा सत्य है। तीव्र वायु ऊँचे वृक्ष को निश्चित ही धराशायी कर देता है किन्तु नीचे (पृथ्वी में) लगी घास को वह कभी भी नहीं उखाड़ता।

यज्ञ, दान, तप, धर्म, परोपकार इत्यादि पुण्य (शुभ) कर्म करके कर्ता यदि गर्वित होता है, तो उस मनुष्य से तो अच्छा वह व्यक्ति है जो पाप-कर्म करता है (तात्पर्य यह कि गर्व या अहङ्कार से बढ़कर पाप कर्म कुछ भी नहीं, क्योंकि सारे दुष्कर्मों की जड़ वही है)।

यतः स पापाचरणानुतापाद्
विनीतभावेन समन्वितोऽस्ति।
दर्पेण सत्यं महती विनष्टि-
र्विनीतभावेन च तस्य रक्षा।।

क्योंकि पापाचरण के लिये होने वाले पश्चात्ताप के कारण वह व्यक्ति विनीत भाव से सम्पन्न हो गया है। गर्व से व्यक्ति का विनाश सचमुच ही निश्चित है, और इसी प्रकार विनम्रता से उसकी सुरक्षा।

(५)

नेदानीं लप्स्यन्ते ह्यस्मद्वचसां ग्रहीतार इति किम्।
भ्रष्टाचरणक्लिष्टाः शान्ता जाता हि विद्वांसः।।

भ्रातश्चन्दन! खिन्नो दृश्यसे विचारमग्न एकाकी।
भ्रष्टाचरणव्यथितः किं नाशं प्रेक्षसे जगतः??

रे हंस! यस्तवावृद्धेरासीद्धेतुः सरोवरः।
स्मर्यते किमसावद्य कृतज्ञेन कृती त्वया??

(५)

भ्रष्टाचार से व्यथित ज्ञानी पुरुषों ने क्या यह सोच कर मौन धारण कर लिया कि 'इस समय हमारी सही बातों को ध्यान से सुनने एवं ग्रहण करने वाले लोग नहीं मिलेंगे'। (वस्तुतः भ्रष्टाचार के विरुद्ध बुद्धिजीवियों को आवाज उठानी चाहिये, उसके विरुद्ध संघर्ष करना चाहिये)।

अरे भाई चन्दन! तुम अकेले खड़े विचार-मग्न और खिन्न से दिखलाई दे रहे हो। क्यों? क्या लोक में व्याप्त भ्रष्टाचार से व्यथित तुम (निकट भविष्य में) उसका नाश देख रहे हो?

अरे हंस! अतीत में जो तुम्हारी चतुर्दिक् वृद्धि का कारण था, वह तुम्हारा उपकारी सरोवर क्या तुम्हारे द्वारा आज भी कृतज्ञता-पूर्वक स्मरण किया जाता है? (कृतज्ञता अर्थात् किये गये उपकार को स्वीकार करना, उसके प्रति ऋणी होना, उत्तम नीति है)।

अयि दलदरविन्द! श्यामभृङ्गो न बन्धु-
स्तव मधुरमरन्दास्वादकाले हि गुञ्जन्।
दिशि विदिशि सखायं गन्धवाहो वहन् वै
तव परिमलराशिं साधुबन्धुः प्रशस्यः।।

विचार्य कार्यं विदधीत पण्डितो
विमृश्य सम्यक् करणीयमेव।
गुणैर्हि लुब्धा वृणते मनीषिणं
विमर्शशीलं स्वयमेव सम्पदः।।

स्वस्यानुकूलं न यदस्ति किञ्चित्
कदापि नेच्छेत्तदिहेतरस्य।
धर्मस्य सर्वस्वमितीह जानन्
चरेद्धि तद्भद्रमवाप्नुयाच्च।।

ओ खिलते कमल! तुम्हारे मधुर मकरन्द-रस का आस्वादन करते समय मधुर गुञ्जार करने वाला काला-कलूटा भौंरा तुम्हारा (वास्तविक) बन्धु नहीं है। वस्तुतः तो यह 'गन्धवाह' अर्थात् तुम्हारी सुगन्ध-राशि को सभी दिशाओं तथा कोणों में ले जाने वाला पवन तुम्हारा सच्चा बन्धु है, प्रशंसनीय सखा है। (निःस्वार्थ हित- सम्पादन ही सच्ची बन्धुता और मैत्री है)।

विवेकशील व्यक्ति को विचार करके ही कोई भी कार्य करना चाहिये। सारी बातों का भली-भाँति विचार करके ही कार्य करणीय है। क्योंकि विचारशील व्यक्ति के गुणों से सर्वथा आकृष्ट होकर सम्पत्ति (लक्ष्मी, सिद्धि) स्वयं ही उसका वरण करती है।

जीवन में जो कुछ अपने अनुकूल न हो, उसे दूसरे के लिये कभी नहीं चाहना चाहिये। इसे धर्म का सर्वस्व (सार) समझते हुये आचरण में लाकर कल्याण की प्राप्ति करनी चाहिये।

द्वयमपि परितोषं वल्कलं वा दुकूलं
सममिह यदि दत्ते तर्हि कस्तत्र भेदः।
स तु भवति दरिद्रो यस्य तृष्णा न शान्ता
मनसि च परितुष्टे नोऽर्थवान् नो दरिद्रः।।

अन्यथा चुम्ब्यते कान्ता भावेन दुहितान्यथा।
तस्माद्भावः प्रधानोऽस्मिन् विश्वे कायान्न संशयः।।

यदि किसी व्यक्ति को वल्कल या रेशमी वस्त्र, दोनों ही समान रूप से सन्तोष देते हैं, तो उसके लिये दोनों में क्या भेद रह जाता है। सच तो यह है कि जिसकी तृष्णा शान्त नहीं हुई है, वही दरिद्र है। मन के सन्तुष्ट होने पर तो न कोई धनवान् रहता है और न ही कोई दरिद्र।

कान्ता का चुम्बन अन्य भाव से, और कन्या का चुम्बन तदितर भाव से किया जाता है। अतः इस जगत् में क्रिया या कार्य नहीं प्रत्युत उसके पीछे विद्यमान भाव ही प्रधान होता है।

परैः कृतां योऽवज्ञां, दुःखं च तत्कृतं सततं सहते।
तस्याजनिरेव वरं, स्वजनयित्र्याः क्लेशकारिणः।।

एकस्य हि मधु मधुरं द्राक्षा च मधुराऽन्यस्य रुचिभेदात्।
तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम्।।

भजनं भक्तस्य कृते, वैराग्यं च विरक्तकृते रुचिरम्।
तस्य तदेव हि रुचिरं, यस्य मनसे यद्धि रुचिकरम्।।

जो व्यक्ति दूसरों के द्वारा किये गये अपमान एवं उससे उत्पन्न दुःख को सतत सहता रहता है, अपनी माता को (स्व-जन्म से) क्लेश देने वाले उस व्यक्ति का जन्म न लेना ही उचित था, ठीक था।

एक के लिये मधु (शहद) मीठी है तो दूसरे के लिये रुचि-भेद से अङ्गूर मीठा है। जिसका मन जिसमें लगा है, उसके लिये वही मधुर है।

भक्त जनों के लिये भगवद्-भजन, एवं विरक्तों के लिये वैराग्य रुचिर अर्थात् मनोनुकूल या सुखद है। जिसके मन के अनुकूल जो भी है, वही उसके लिये सुन्दर है, अनुकूल है।

हंसः स्वबन्धुनिवहे नितरां विभाति
नैवं कदापि बकपङ्क्तिषु शोभते सः।
एवं विचक्षणनरः कृतिभिः परीतः
नित्यं विभाति नितरां नहि मूढमध्ये।।

यो व्याधियुक्तोऽपि च वित्तहीनो
देशान्तरं चास्ति गतश्च यो नरः।
सर्वस्य दुःखस्य विनाशहेतुः
सत्यस्य मित्रस्य सुदर्शनं हि।।

यस्मिन्नैवाभिमानोऽस्ति स्वेदशस्यात्मनोऽथवा।
नराधमः स एवास्ति जीवन्नपि मृतो हि सः।।

हंस अपनी जाति में खूब शोभा पाता है, बकों की पाँत में तो वह शोभित नहीं होता। इसी प्रकार बुद्धिमान् पुरुष विद्वानों से घिरा हुआ रहने पर ही शोभित होता है, मूढों के बीच में बिल्कुल नहीं।

जो व्यक्ति व्याधियुक्त होने के साथ ही धनहीन भी है, और जो व्यक्ति घर छोड़कर देशान्तर गया हुआ है, दूसरे देश में स्थित है, ऐसे सभी लोगों के दुःखों के अन्त का कारण है सच्चे मित्र का सुन्दर-सुखद दर्शन।

जिस व्यक्ति में अपना या अपने देश का स्वाभिमान नहीं है, वह अधम मनुष्य है एवं जीवित रहते हुये भी मरा हुआ ही है।

# सच्छिक्षा

स्वास्थ्यकामो भवेन्नित्यं शीघ्रशायी ह्युषर्बुधः।
प्रातः सञ्चरणं कुर्याद् व्यायामं चाभ्यसेत्सदा।।

मादकं वस्तु न ग्राह्यं कदापि मदिरादिकम्।
सात्त्विकं भोजनं ग्राह्यं तेन स्वास्थ्यं सुरक्षितम्।।

स्वास्थ्यस्य परमापेक्षा विद्यावित्तार्जने खलु।
एभिस्त्रिभिर्नरो विन्देज्जीवनस्य परं सुखम्।।

## समुचित शिक्षा

स्वास्थ्य की कामना करने वाले व्यक्ति को (दिन भर की व्यस्तता के अनन्तर) नित्य शीघ्रातिशीघ्र सोने वाला तथा उषा-काल (अत्यन्त तड़के) अर्थात् ब्राह्म-वेला में जगने वाला होना चाहिये। प्रातः भ्रमण (morning walk) भी करना चाहिये तथा व्यायाम भी सदैव करना चाहिये।

मदिरा इत्यादि मादक-नशीली वस्तुओं का ग्रहण कदापि नहीं करना चाहिये, एवं सदैव सात्त्विक भोजन ही ग्रहण करना चाहिये। इससे स्वास्थ्य सुरक्षित रहेगा।

विद्या और वित्त के उपार्जन में स्वास्थ्य की बड़ी अपेक्षा होती है। इन तीनों के द्वारा ही मनुष्य जीवन का वास्तविक सुख प्राप्त कर पाता है।

अपि चावधेयमेतन्नित्यं वृद्धोपसेविनः।
लभन्तेऽवश्यमायुष्यं वित्तं विद्यां यशो बलम्।।

बहिर्दृष्टिर्हि पुरुषोऽभ्यन्तरे नैव पश्यति।
अन्तर्दृष्टेरभावे तु सन्मार्गो नैव लभ्यते।।

तस्यालाभे न काचिद्धि विशिष्टाधिगतिर्भवेत्।
आजीवनमितो भ्रष्टस्ततो भ्रष्टश्च दुःखभाक्।।

अन्तर्दृष्टेः कृते श्रेष्ठा ब्राह्मवेला न संशयः।
ब्राह्मवेलेति नामैव ब्रह्मचिन्तनकारणात्।।

इसके अतिरिक्त यह तथ्य (बात) भी ध्यान देने योग्य है कि वृद्धजनों की नित्य सेवा करने वाले लोगों को अवश्य ही दीर्घ आयु, धन, विद्या, यश एवं बल की प्राप्ति होती है।

एक बात और; जीवनपर्यन्त बाहर की वस्तुओं पर ही दृष्टि (ध्यान) रखने वाला व्यक्ति अपने भीतर तो कभी झाँकता ही नहीं। अतः अन्तर्दृष्टि के अभाव में उसे जीवन जीने का सही मार्ग मिलता ही नहीं।

उसके न मिलने पर कोई भी विशिष्ट या उल्लेखनीय प्राप्ति नहीं होती। ऐसी स्थिति में मनुष्य आजीवन इधर-उधर भटकता हुआ निरन्तर दुःख भोगता रहता है।

अन्तर्दृष्टि के लिये ब्राह्म वेला ही सर्वश्रेष्ठ काल है, इसमें सन्देह नहीं। वस्तुतः तो 'ब्राह्मवेला' (ब्राह्म मुहूर्त) नाम ही इस कारण से पड़ा है कि यह वेला, यह काल ब्रह्म-तत्त्व के चिन्तन का, उसके ध्यान का (एवं तद्द्वारा ब्रह्म-दृष्टि प्राप्त करने का) सर्वश्रेष्ठ काल है।

# साध्वी शिक्षा-पद्धतिः

(१)

सैव हि शिक्षा साध्वी या सर्वथा छात्रकेन्द्रिता भवति।
यल्लक्ष्यं च तदन्तर्निहितशक्तेर्बहिः प्रकटनम्।।

शक्तेर्यद्धिप्रकटनं केवलमिदं विकासोऽस्ति छात्रस्य।
अयं विकासो द्विविधो भौतिकश्चाध्यात्मिकस्तथा।।

# उत्तम शिक्षा-पद्धति

(१)

वही शिक्षा उत्तम होती है जो छात्र-केन्द्रित होती है, और जिसका लक्ष्य उसकी अन्तर्निहित शक्ति को विकसित करना होता है।

भीतर छिपी शक्ति का जो बाहर प्रकट होना है, यही छात्र का विकास होना है। यह विकास भौतिक तथा आध्यात्मिक रूप से दो प्रकार का होता है।

भौतिकविकासहेतोर्विज्ञानकलोद्योगादिशिक्षणम्।
अपेक्ष्यते चातितरां नात्रास्ति सन्देहलेशोऽपि।।

नैतिकमूल्यशिक्षणं ह्याध्यात्मिकविकासकृतेऽपेक्षितम्।
द्विविधश्चैव विकासो जीवनं विदधाति सार्थकम्।।

नैतिकमूल्यविहीनं मानवजीवनं सर्वथा व्यर्थम्।
तत्सा शिक्षा ग्राह्या यस्यां तच्छिक्षितुं व्यवस्था।।

भौतिक विकास के लिये विज्ञान, कला-कौशल एवं उद्योग आदि की शिक्षा निश्चित रूप से अपेक्षित होती है। इसमें तनिक भी सन्देह नहीं।

आध्यात्मिक विकास के लिये नैतिक मूल्यों की शिक्षा अपेक्षित होती है। उक्त दोनों ही प्रकार के विकास से मानव-जीवन सार्थक होता है।

नैतिक मूल्यों से रहित मानव-जीवन सर्वथा व्यर्थ है। अतएव वही शिक्षा ग्राह्य है, वही शिक्षा लेने योग्य है जिसमें उसे सीखने की, प्राप्त करने की, व्यवस्था हो।

या शिक्षा पदप्राप्तियोग्यतामेव केवलं जनयति।
मानवमूल्योत्पत्त्या जीवनं न करोति सार्थकम्।।
यस्यां शिक्षारीतौ नैतिकमूल्येषु बलं न दीयते।
सा मानवमत्यन्तं दानवमेव करोत्यन्ततः।।

साफल्यमात्रदात्री सा शिक्षा नैव सर्वथा पूर्णा।
सफलं सार्थकं चापि जीवनं चिकीर्षुरेव सती।।

जो शिक्षा केवल पद-प्राप्ति की योग्यता उत्पन्न करती है, एवं मानव-मूल्यों की उत्पत्ति द्वारा जीवन को सार्थक नहीं बनाती, जिस शिक्षा-पद्धति में नैतिक मूल्यों के विकास पर बल नहीं दिया जाता, वह अन्त में मानव को दानव बना कर ही छोड़ती है।

जीवन-निर्वाह में केवल समर्थ या सफल बनाने वाली वह शिक्षा सब प्रकार से परिपूर्ण शिक्षा नहीं है। जीवन को सफल बनाने के साथ-साथ, उसे सार्थक भी बनाने वाली शिक्षा ही सही (पूर्ण) शिक्षा है।

(२)

प्राचीनात्समयाद्धि संस्कृतगिरि प्राप्तं च यद्वाङ्मयं
तस्मिञ्जीवनपद्धतेः समुचिता व्यक्तिर्दरीदृश्यते।
तस्यामस्ति समन्वयो बहुविधो भूतात्मनोस्तत्त्वयोः
तस्यैवाद्यतनेऽपि शिक्षणविधावस्ति व्यपेक्षा पुनः।।

आयुर्वास्तुरसायनादिविविधा विद्या यदस्यां गिरि
प्राप्यन्ते ह्यधुना समन्वयफलं, तत्रास्ति कः संशयः।
एतेनैव च सिद्धमेतदखिलं तथ्यं यदेता विधाः
सौविध्याय च मानवस्य नितरामापेक्षिताः[1] सन्ति हि।।

(२)

प्राचीन काल से ही संस्कृत-भाषा में लिखित जो वाङ्मय प्राप्त है, उसमें भारतीय जीवन-पद्धति की समुचित अभिव्यक्ति बहुतायत से दिखाई पड़ती है। उस अभिव्यक्ति में भौतिक-विज्ञान और आध्यात्मिक-विज्ञान के बीच बहुविध सामञ्जस्य विद्यमान है। फिर उसी सामञ्जस्य की विशेष अपेक्षा है आज की भारतीय शिक्षा-पद्धति में।

चिकित्सा, वास्तु, रसायन इत्यादि विविध विज्ञानों की आज भी इस संस्कृत-भाषा में जो प्राप्त होती है, वह भारतीय ऋषियों की समन्वय-दृष्टि का ही फल है। इसमें कुछ भी संशय नहीं है। इतने से ही यह तथ्य सम्पूर्णतया सिद्ध हो जाता है कि ये सारी विधायें मानव-जीवन के सुविधा-पूर्वक निर्वाह के लिये निरन्तर-अपेक्षित मानी जाती रही हैं।

---

१. आ समन्तादपेक्षिता इत्यापेक्षिताः, सर्वथा अपेक्षिता इत्यर्थः।

ज्योतिस्सङ्गीतवास्तूनां चिकित्सायां विशेषतः।
क्षेत्रेषु लब्धयोऽस्माकमुल्लेख्याः सर्वतोऽधिकम्।।

किन्त्वेषां हि समुद्देश्यमात्मनः परिशोधनम्।
देहेन्द्रियमनोबुद्धिस्वास्थ्यप्राप्त्या सुनिश्चितम्।।

शिक्षाप्रणाल्याधुनिकी स्वदेशे
या वर्तते सा नहि पूर्वरूपा।
अध्यात्मविज्ञान समन्वयोऽति
नास्त्यत्र दृष्टौ न च तत्प्रयासः।।

समन्वयस्याभावो हि यो विज्ञानात्मज्ञानयोः।
स चाधुनिकशिक्षायाः सर्वतोऽप्यधिका त्रुटिः।।

विशेष रूप से ज्योतिष, वास्तु एवं चिकित्सा इत्यादि विज्ञानों तथा सङ्गीत इत्यादि कलाओं के क्षेत्र में हमारी उपलब्धियाँ सर्वाधिक उल्लेखनीय रही हैं।

किन्तु इन सभी विज्ञानों की शिक्षा का अन्तिम लक्ष्य देह, इन्द्रिय, मन एवं बुद्धि के नैरुज्य की प्राप्ति के द्वारा आत्मा का परिशोधन ही रहा है, उसे सत्संस्कार-सम्पन्न बनाना ही रहा है, यह बात तय है।

किन्तु हमारी आज की शिक्षा-प्रणाली पूर्व की शिक्षा-प्रणाली जैसी नहीं है। इसमें न तो आत्मज्ञान और भौतिक विज्ञानों का समन्वय या मेल है और न ही तदर्थ कोई प्रयास दिखलाई पड़ता है। यह समन्वयाभाव ही आज की शिक्षा-प्रणाली की सबसे बड़ी त्रुटि या कमी है।

(३)

तुल्यानुभूतिः समवेदनास्ति
सुखेषु दुःखेषु समानभागिता।
सा शिक्षया चेन्न नरेषु जन्यते
परस्परं तर्हि न सा सुशिक्षा।।

विभज्यते स्निग्धजनैर्यदा व्यथा
न चाप्यसह्या खलु सह्यवेदना![1]
सुखं विभक्तं च विवर्धते खलु
सुशिक्षया प्राप्यमिदं महाफलम्।।

संवेदनां परार्थामुत्तमगुणं विजानीयान्नरस्य।
मानुष्यकं हि तयैव सुष्ठु परिज्ञायते सर्वैः।।

( ३ )

सुख और दुःख में जो समानभागिता है, दूसरों के सुख-दुःख को बाँट लेना है, समानरूप से सुख-दुख की अनुभूति करना है, वही 'समवेदना' अर्थात् समान वेदना या अनुभूति है। यदि शिक्षा से शिक्षित जनों में यह उत्पन्न नहीं होती तो वह शिक्षा 'सुशिक्षा' अर्थात् उपयुक्त या सही शिक्षा नहीं है।

स्नेही जनों के द्वारा जब दुःख बाँट लिया जाता है तो वह भी, असह्य नहीं रह जाता, उसकी अनुभूति असह्य होने पर भी सह्य हो जाती है; और सुख बाँटे जाने पर खूब बढ़ता है, द्विगुणित हो जाता है। सही और उपयुक्त शिक्षा से प्राप्त होने वाला यही उत्कृष्ट फल है, महाफल है।

दूसरों के प्रति होने वाली समवेदना (सहानुभूति, समान अनुभव) को मनुष्य का उत्तम गुण जानना चाहिये। क्योंकि सभी के द्वारा उसी से मनुष्यता की निश्चित रूप से पहचान की जाती है।

---

१. सह्या वेदना अनुभूतिः यस्याः सा।

(४)

लोकाचारानभिज्ञा ये शास्त्रेषु कुशला अपि।
ते नराः शिक्षिता मूर्खा अथवा मूर्खपण्डिताः।।

लोकज्ञानेन शून्यस्य लोकयात्राऽतिकष्टदा।
साफल्यार्थं ततस्तस्या लोकज्ञो हि भवेन्नरः।।

लोकज्ञानकृते तस्माच्छिक्षायामनिवार्यता।
स्यात् सामाजिकशास्त्रस्याध्ययनस्य विशेषतः।।

(४)

जो लोकाचार से अनभिज्ञ हैं केवल शास्त्रज्ञान में प्रवीण हैं, वे मनुष्य पढ़े-लिखे मूर्ख या मूर्ख पण्डित हैं।

लोक-ज्ञान से शून्य व्यक्ति की जीवन-यात्रा अत्यन्त कष्टप्रद होती है। अतः उसके सहज-सरल निर्वाह के लिये मनुष्य को लोक का, समाज का, ज्ञान होना आवश्यक है।

ऐसी वस्तुस्थिति होने पर, लोक-ज्ञान के लिये शिक्षा में सामाजिक विज्ञान के अध्ययन की अनिवार्यता का विशेष विधान होना चाहिये।

(५)

शिक्षाव्यवस्थाऽद्यतनी कथञ्चित्
परस्परप्रेम-विकासने खलु।
साफल्यमाप्तुं न शशाक, तस्मा-
दादर्शशिक्षा न बभूव काचित्॥

प्रेमैव मूलं समवेदनायाः
प्रेमैव मूलं सहकारितायाः।
प्रेमैव सारं खलु जीवनस्य
तच्छून्यशिक्षा न भवेद्धि शिक्षा॥

यां प्राप्य मन्येत, विनापि विश्वं
कार्यं चलेत्तस्य, न साऽस्ति शिक्षा।
विश्वस्य कार्यं न चलेद्विना तं
यया हि मन्येत, न साऽपि शिक्षा॥

(५)

आधुनिक शिक्षा-व्यवस्था को पारस्परिक प्रेम विकसित करने में सफलता नहीं मिल सकी, इसलिये वह कोई आदर्श शिक्षा-व्यवस्था नहीं बन पाई।

प्रेम ही समवेदना का मूल है, प्रेम ही सहकारिता का मूल है, प्रेम ही मनुष्य-जीवन का सार है। उससे शून्य शिक्षा तो सही और उपयोगी शिक्षा हो ही नहीं सकती।

जिस शिक्षा को पाकर व्यक्ति यह सोचता है कि विश्व के विना उसका काम चलेगा, वह निस्सन्देह शिक्षा नहीं है। और जिस शिक्षा से वह यह सोचता है कि उसके विना विश्व का काम नहीं चलेगा, वह भी शिक्षा नहीं है।

मानुष्य-शिक्षां च यदा ददाति
मानुष्यतत्त्वस्य विकासनाय।
तदैव सा कल्यकरी न चान्यथा
ततः प्रयासं विदधीत तत्कृते।।

मानुष्यमूले सहकारतत्त्वे
जाते ध्रुवा राष्ट्रसमुन्नतिर्हि।
यतो मिथस्सा सहकारितैव
सर्वोन्नतेरस्ति हि मूलमेकम्।।

कोई भी शिक्षा-व्यवस्था तभी कल्याणकारी होती है जब वह मनुष्यता की, प्रेम की, शिक्षा देती है, जब वह परस्पर प्रेम-भाव के विकसित होने में साधन बनती है, अन्यथा नहीं। तो फिर उसे तदर्थ प्रयत्नशील होना चाहिये।

मनुष्यता या प्रेम जिसका मूल है, उस सहकारिता के विकसित होने पर ही राष्ट्र की समुन्नति सुनिश्चित है क्योंकि परस्पर सहकारिता की भावना ही सारी उन्नति का एकमात्र मूल है।

(६)

बभूवुः शत्रवोऽस्माकं शताब्दीर्विश्वशक्तयः।
तथाप्यस्तित्वमस्माकं नैव नष्टं कदाचन।।

सन्नीतिपोषिका नित्यं विश्वकल्याणकारिणी।
उपेता शाश्वतैर्मूल्यैः संस्कृतिस्तत्र कारणम्।।

तस्माच्छाश्वतमूल्यायाः संस्कृतेः शिक्षणं परम्।
उपादेयं हि विश्वस्य नेतृत्वं तेन प्राप्स्यते।।

(६)

विश्व की बड़ी-बड़ी शक्तियाँ अनेक शताब्दियों तक हमारी दुश्मन रहीं, फिर भी वे हमारा कुछ बिगाड़ नहीं सकीं। हमारा अस्तित्व कभी भी नष्ट नहीं हुआ।

सन्नीति की पोषक, नित्य सर्वहितैषिणी एवं जीवन के शाश्वत मूल्यों से समन्वित हमारी संस्कृति ही इसका प्रमुख कारण रही।

अतः शाश्वत जीवन-मूल्यों वाली संस्कृति की शिक्षा परम उपयोगी है। उसी से भारत फिर से विश्व का नेतृत्व प्राप्त कर सकेगा।

(७)

आविष्कारैरनुदिनकृतैर्वृद्धिमाप्नोति विश्वं
किन्त्वस्माकं हृदयपटलं ह्रीयतेऽनुक्रमेण।
नीतेर्ज्ञानं न भवति यतो भौतिकज्ञानमेव
तस्मात्पारस्परिककलहो निश्चितः स्वार्थहेतोः।।

पिता समेषामेकस्तस्यैव तेषु वासो जीव इति।
इत्याध्यात्मं ज्ञानं, मूलं खलु सामरस्यस्य।।

आध्यात्मिकताधृतया शिक्षया शून्या केवलभौतिकी।
शिक्षा विरोधपरकं सङ्घर्षं केवलं जनयति।।

(७)

अनुदिन हो रहे आविष्कारों से विश्व वृद्धि को प्राप्त हो रहा है, उसका क्षेत्रफल बढ़ रहा है। किन्तु हमारा मन-मस्तिष्क तो क्रमशः छोटा होता जा रहा है, सिकुड़ता जा रहा है क्योंकि सन्नीति का ज्ञान तो मिलता नहीं, केवल भौतिक ज्ञान ही मिलता है। ऐसी स्थिति में नये-नये क्षेत्रों पर अधिकाधिक अधिकार जमाने के लिये संघर्ष अवश्यम्भावी है।

परस्पर सामञ्जस्य और समरसता का कारण है इस तथ्य का ज्ञान कि सभी की एक ही स्रष्टा द्वारा सृष्टि हुई है, एवं सभी में उसी के अंशभूत जीवात्मा का वास है। यह आध्यात्मिक ज्ञान जब तक नहीं होगा, तब तक परस्पर विरोध और तज्जन्य सङ्घर्ष का ही ताण्डव-नृत्य होता रहेगा। (अतः आध्यात्मिक शिक्षा के विना भौतिकी (दुनियावी) शिक्षा जरूरी होने पर भी अधूरी है)।

नैतिक्याध्यात्मिकी शिक्षा ध्रुवं कल्याणकारिणी।
मानवीयगुणोत्पत्त्यै सा ह्यत्यन्तमपेक्षिता।।

ततस्तस्या व्यवस्था कर्तव्याऽवश्यमेव हि।
अन्यथा 'मानवो' लोके दुर्लभः स्यादसंशयम्।।

पुरे महान्ति भूतानि तैस्सहोच्चपदान्यपि।
लप्स्यन्ते, नैव 'मनुजः' समभावसमन्वितः।।

सन्नीति और अध्यात्म की शिक्षा निश्चित रूप से कल्याणकारिणी होगी। मानवीय गुणों के विकास के लिये वह आत्यन्तिक रूप से अपेक्षित है।

अतः उसकी व्यवस्था यथाशीघ्र अवश्य ही की जानी चाहिये। ऐसा न होने पर, लोक में 'मनुष्य' (सच्चे अर्थों में 'मानव') अवश्य ही दुर्लभ हो जायगा।

पुर-पड़ोस में लोग मिलेंगे, उनके साथ जुड़े उच्च पद (ओहदे) भी मिलेंगे किन्तु समवेदना-समान अनुभूति या भावना-प्रकट करने वाला 'मानव' नहीं मिलेगा।

## कालः

यस्य कालस्य कल्पाद्यैः विभागैर्गण्यते वयः।
पदार्थानामनित्यः स समयो गणनापरः।।

अहमेवाक्षयः काल इत्युक्त्या परमेश्वरः।
नित्यः कालोऽस्ति स पर आतिकालिक एव च।।

## काल

कल्प, युग, वर्ष, अयन मास, दिन, घड़ी, क्षण आदि नामों से कहे जाने वाले जिस काल से पदार्थों की आयु की गणना होती है, गणनापरक वह काल अनित्य है।

'मैं अक्षय-अविनाशी काल हूँ', इस कथन के द्वारा भगवान् ने अपने को नित्य काल कहा है। यह 'आतिकालिक' अर्थात् अनित्य काल से परे होने से नित्य भगवद्रूप ही है। ['कालः कलयतामहम्' (गीता १०।३०), की भाँति ही, 'अक्षयः कालः' उक्ति भी गीता के दशम अध्याय (श्लोक ३३) की ही है। यह क्षीयमाण या नश्वर (अनित्य) काल-वर्षादि काल से परे 'महाकाल' है]।

मृत्युः सर्वहरश्चाहमित्युक्त्या व्यनक्ति सः।
अस्थिरं जीवलोकेऽस्मिन् प्राणिमात्रस्य जीवनम्॥

इतो वत्स्यामि वर्षासु, इतश्शीतनिदाघयोः।
एवं विचिन्तयन् बालो मृत्युं नैव हि पश्यति॥

'सबका सब कुछ हर लेने वाला मृत्यु नामक काल भी मैं ही हूँ', इस कथन के द्वारा भगवान ने यह रहस्य उद्घाटित किया है कि इस जीवलोक में प्राणिमात्र का जीवन अस्थिर-अस्थायी है, अनित्य है, कुछ क्षणों का ही है। ('मृत्युःसर्वहरश्चाहम्' कथन भी गीता के दशम अध्याय-श्लोक ३४-का ही है)।

यहाँ मैं वर्षाकाल में रहूँगा, यहाँ हेमन्त में, और यहाँ ग्रीष्म में। इस प्रकार सोचने वाला मूढ़ नासमझ प्राणी अपनी मृत्यु को नहीं देखता जो क्षण भर में ही सब कुछ हर लेती है, और उसे न जाने कहाँ भेज देती है।

# कालस्य महत्त्वम्

कोट्याधिपत्यमधिगम्य सुखानुभावी[1]
कालावधिं विपदि वर्धयितुं न शक्तः।
स्वल्पं कदाप्यखिलभूतिसमर्पणेन,
कालो महार्घ इति तथ्यमतश्च सिद्धम्।।

कालस्य जागतिकवस्तुषु मूल्यमस्ति
सर्वाधिकं हि मनसा सुविचार्य धीरः।
नैकं क्षणं कथमपि क्षिणुयाद्यतो हि
प्राप्नोत्यभीष्टमतिसन्निकटं च सिद्धेः।।

# काल का महत्त्व

करोड़ों का अधिपति होकर सुख का अनुभव करने वाला भी व्यक्ति काल (मृत्यु) के आ जाने पर, अपने जीवन की कालावधि को सारा धन-वैभव देकर भी, जरा भी-एक क्षण भी-बढ़ाने में समर्थ नहीं होता। इससे सिद्ध है कि 'काल' जीवन की सबसे मूल्यवान्, वेशकीमती वस्तु है।

जगत् के समस्त पदार्थों में सर्वाधिक मूल्यवान् काल ही है, इस तथ्य का मन से अच्छी प्रकार विचार करके बुद्धिमान् व्यक्ति कदापि एक क्षण भी नष्ट नहीं करता जिससे उसका अभीष्ट अतिशीघ्र सिद्धि के अत्यन्त निकट पहुँच जाता है।



१. सुखमनुभवितुं शीलं यस्य सः, कर्तरि ताच्छील्ये णिनिः।

नद्याः प्रवाहमिव कालगतिं न कश्चिद्
रोद्धुं कदाप्यतिसमर्थजनोऽपि शक्तः।
कालो न तादृगनुपालयतीह कश्चिद्
लोको यथास्य कुरुते प्रतिपालनं हि।।

पलायमानस्य द्रुतं हि यो नरः
विज्ञाय कालस्य महार्घतां वै।
करोति सन्तं ह्युपयोगमस्य
स एव साफल्यमुपैति लोके।।

नायाति कालो विगतः कदापि
व्यर्थं ततस्तं न नयेद्विवेकी।
काले क्रियाणां करणेन देही
कार्यस्य सिद्धौ लभते प्रतिष्ठाम्।।

अत्यधिक सामर्थ्य वाला व्यक्ति भी नदी की सतत बहती हुई धारा के समान सतत प्रवहमान काल की गति को रोकने में कभी भी समर्थ-सफल नहीं होता। काल की जैसी प्रतीक्षा लोक करता है, वैसी प्रतीक्षा काल किसी भी प्राणी की नहीं करता।

तीव्र वेग से भागते हुये काल को महार्घ (महँगा, वेशकीमती) जानते हुये जो उसका सही उपयोग करता है, वही लोक में सफलता प्राप्त करता है।

बीता हुआ समय फिर लौट कर नहीं आता, अतः विवेकी पुरुष को उसे व्यर्थ ही नहीं बिताना चाहिये। शरीरधारी (प्राणी) उचित समय पर कार्य करने से, उसके पूर्ण हो जाने पर, सम्मान प्राप्त करता है, समादृत होता है।

## ध्रुवः कालविपर्ययः

कदापि कल्योऽस्ति कदापि नोत्तमो
ध्रुवोऽस्ति कालस्य सदैव पर्ययः।
कस्यापि कालो न सदैकरूपो
नानेन विग्नो भवतीह धीरः।।

वीरोऽर्जुनः स्वेन शरासनेन
गाण्डीवनाम्ना विदितेन लोके।
रथेन बाणेन समन्वितोऽपि
कृष्णस्त्रियस्त्रातुमशक्त एव।।

अन्यथा चिन्तितं कार्यमन्यथैवोपपद्यते।
दैवं कालगतिश्चोभेऽचिन्त्ये इत्येव सिध्यति।।

## काल का परिवर्तन ध्रुव-सत्य

काल का परिवर्तन ध्रुव सत्य है। वह कभी शुभ (अनुकूल) तो कभी अशुभ (प्रतिकूल) होता है। किसी भी व्यक्ति का समय सदैव एक सा नहीं बीतता। यह तथ्य जानते हुये विवेकी को विपरीत काल से उद्विग्न नहीं होना चाहिये।

महापराक्रमी अर्जुन अपने लोक-प्रसिद्ध गाण्डीव नामक धनुष, एवं अक्षय्य बाण तथा रथ से युक्त होकर भी, काल के विपरीत होने से, श्रीकृष्ण जी की पत्नियों की रक्षा नहीं कर सके।

अन्य प्रकार से सोचा गया कार्य अन्य ही प्रकार से हो जाता है। इससे सिद्ध होता है कि दैव और काल की गति दोनों अचिन्त्य हैं।

## कालज्ञस्य महिमा

कालो हि युक्तावसरोऽपि बोध्यो
यस्तं विजानाति स कालवेत्ता।
कालज्ञ इत्यादिपदैः स शस्यः
स्यादीदृशस्तर्ह्यपि तत्त्ववेत्ता।।

स्वकीय कल्याणकरीश्च योजना
अकाल एव व्यवहार आनयन्।
नृपोऽपि युक्तावसरानभिज्ञः
साफल्यराहित्यकृते विनिन्द्यः।।

## कार्य का उपयुक्त अवसर महत्त्वपूर्ण

किसी वस्तु या कार्य के करने का उचित अवसर भी 'काल' नाम से ही जाना जाता है। जो उसे जानता है, वही कालवेत्ता है। वही 'कालज्ञ' इत्यादि पदों से प्रशंसनीय होता है। तो तत्त्ववेत्ता को इस प्रकार कालज्ञ अर्थात् उपयुक्त अवसर का ज्ञाता होना चाहिये।

अपनी कल्याणकारी योजनाओं को भी अनवसर पर प्रयोग या व्यवहार में लाने वाला अकालज्ञ नृपति भी सफलता प्राप्त न करने के लिये निन्दनीय होता है।

एवं बहुज्ञोऽपि जनो यदि स्यात्
वक्ता ह्यकाले, न स शोभनीयः।
व्याहार एषोऽस्य भवत्यनर्ह-
स्तस्मादवज्ञात उपेक्षितश्च।।

अन्येऽपि युक्तावसरानभिज्ञाः
प्रायश्च लोके नितरामुपेक्ष्याः।
तस्माद्धि बुद्ध्वावसरं च युक्तं
तस्यानुसारेण च कर्म कुयात्।।

दत्तावधानश्च भवेदवश्यं
न कालवेत्ता हि भवत्युपेक्ष्यः।
एवं स्थिते सर्वविधाः स्वकीयाः
क्रियाश्च कुर्यादनुकूलकाले।।

इसी प्रकार बहुज्ञ (बहुश्रुत) व्यक्ति भी यदि अनवसर पर अपनी कोई बात कहता या रखता है तो वह प्रशंसनीय नहीं होता। उसका वह कथन अनुपयुक्त होने से उपेक्षित ही होता है।

उपयुक्त अवसर न जानने वाले अन्य लोग भी लोक में प्रायः नितान्त उपेक्षित होते हैं। अतः उपयुक्त अवसर जानकर तदनुसार ही कार्य करना चाहिये।

इस प्रकार अवसरानुसार व्यवहार करने वाले की ओर सभी ध्यान देते हैं और वह कभी भी उपेक्षणीय नहीं होता। ऐसी वस्तु-स्थिति होने से, अपनी सारी क्रियाओं को अनुकूल काल में ही करना चाहिये।

इयन्महार्घकालस्य शान्तेनैव मनसा सदुपयोगः।
भवति च मनसः शान्तिर्वासनात्यागेन नान्यथा।।

तृष्णेत्यपरपर्याय-वासनात्यागो विवेकसम्भवः।
स च सम्भवति विवेकः सतां सङ्गेनैव नान्यथा।।

मनोमतङ्गस्य नियन्त्रणेन, विवेकशक्तेरुदयेन नूत्नाः।
विपत्तयो नैव समापतन्ति, पुरातनीनां च विनाश आशु।।

इतने महँगे–बहुमूल्य काल का सदुपयोग शान्त मन से ही सम्भव है, और मन की शान्ति वासना के त्याग से ही सम्भव है, अन्य किसी तरह से नहीं।

वासना, जिसका दूसरा नाम 'तृष्णा' है, का परित्याग विवेक से ही सम्भव है, और यह विवेक केवल सन्त–महात्माओं के सङ्ग से उत्पन्न होता है, अन्य किसी भी तरह से नहीं।

उन्मत्त मनो–मतङ्ग के नियन्त्रण से विवेकशक्ति का उदय हो जाने पर नई विपत्तियाँ नहीं आती हैं, एवं (पुरातन कर्मों की फलभूत) पुरानी विपत्तियाँ शीघ्र ही नष्ट हो जाती हैं।

## नैव कालः प्रतीक्षते

आगामिकालेष्विदमेव कार्यं
द्रुतं करिष्येऽवसरेऽनुकूले।
ईदृग्विचारो न कदापि युक्तो
यतो भविष्यं न कदापि वश्यम्।।

जानाति कोऽनन्तर आयतिः[1] का
मृत्युर्यदि स्यादकृतं तु कार्यम्।
कर्तुं न कश्चित् समयो हि लप्स्यते
तच्चिन्तितं कार्यमपूर्णमेव।।

## काल किसी की प्रतीक्षा नहीं करता

भविष्य में अनुकूल अवसर मिलने पर यही कार्य शीघ्रता से सर्व-प्रथम करेंगे, ऐसा विचार कदापि ठीक नहीं है क्योंकि भविष्य कभी भी अपने वश में नहीं रहता।

कौन जानता है कि बाद में आने वाला समय अर्थात् भविष्य क्या है? कहीं मृत्यु हो गई तो न किये हुये कार्य को करने का तो कोई समय ही नहीं मिलेगा। फिर तो पूर्व सोचा हुआ कार्य अपूर्ण-अकृत-ही रह जायगा ('काल्हि करै सो आज कर आज करै सो अब्ब। पल में परलय होगी बहुरि करैगो कब्ब।।'-कबीर)।

---



१. आने वाला समय, भविष्य।

श्वः कार्यमद्यैव विधेयमस्ति
श्वो नैव केनापि यतो हि दृष्टम्।
प्राणः प्रयातो यदि पूर्वमेव
कार्यं विधीयेत विलम्बितं नो??

ततस्तु कार्यस्थगनं न युक्तं
सद्यो हि सम्पादनमस्य युक्तम्।
यावन्नवद्वारपुरेऽसवः स्युः
कार्यं समाप्यं खलु तावदेव।।

कल किया जाने वाला कार्य आज ही कर लिया जाना चाहिये, क्योंकि 'कल' को किसी ने भी नहीं देखा है। यदि उसके पूर्व ही प्राण प्रयाण कर जाता है, तो रुका हुआ कार्य नहीं किया जा सकेगा?

इसलिये सोचे हुये कार्य को टालना या रोकना ठीक नहीं है, उसका तुरन्त सम्पादन ही ठीक है। जब तक नव द्वारों वाले पुर अर्थात् शरीर में प्राण है, तभी तक उस कार्य को कर लेना चाहिये।

## सर्वस्य निश्चितः समयः

ऋतुपतेश्शुभ आगमने पुनः
परभृतस्वर उत्तममाधुरी।
सलिलवर्षणकाल-समागमे
नहि पुरातनगीतमयस्स्वरः॥

सलिलकाल-शुभागमने पुनः
सुखदनर्तनवाङ्निरतः शिखी।
हरति नेत्रमथापि मनो भृशं
परममोदकरश्च तथाऽप्यसौ॥

## सभी का समय निश्चित

ऋतुराज वसन्त के एक बार फिर शुभागमन पर कोयल के स्वर में उत्कृष्टतम माधुरी (मिठास) आ जाती है। किन्तु वर्षा ऋतु का आगमन होते ही कोयल का पूर्व गीतात्मक स्वर नहीं रहता। उसकी पहले वाली स्वर-माधुरी न जाने क्या हो जाती है?

किन्तु वर्षा ऋतु का आगमन, उसकी वापसी, मयूर के लिये शुभ ही होती है, क्योंकि आकाश में बादलों के घिरते ही मोर सर्व-सामान्य को आनन्द देने वाली नाच और प्रिय मधुर बोल से नेत्रों और मन को सुतरां हर लेता है और उस प्रकार से वह सभी के लिये परम प्रमोद-उल्लास का कारक बनता है।

शिखिमहत्त्वमपैति शरद्यृतौ[१]
स समयोऽस्ति मधुव्रतहंसयोः।
समय एव करोति बलाबलम्
इति सुनिश्चितमस्ति, न संशयः।।

अपि च तथ्यमिदं मनसि क्रियात्
निहितकाल उपैति न पूर्वतः।
सकलकाम्यपदार्थ, इति स्मरन्[२]
नहि तदर्थमतीव समुत्सुकः।।

वर्षा ऋतु के अनन्तर शरद् ऋतु में मयूर का महत्त्व चला जाता है, समाप्त हो जाता है। शरद् का समय मधुकर (भ्रमर) और हंस का होता है। सचमुच समय ही प्राणियों और पदार्थों को बलवान् और निर्बल बनाता रहता है। यह बात तय है, इसमें तनिक भी सन्देह नहीं।

एक बात और भी (भगवत्-कृपा से) मन में धारण कर लेनी चाहिये, वह यह कि सारी प्राप्य वस्तुयें अपने निश्चित समय पर ही पास आती हैं, प्राप्त होती हैं, समय से पूर्व नहीं। इसलिये काम्य या प्राप्य वस्तु के लिये पूर्व से ही चिन्ता करते हुये, तदर्थ समुत्सुक नहीं होना चाहिये। उसकी प्राप्ति की प्रतीक्षा में व्यर्थ समय गँवाना निरी मूढता ही है।

---

१. शरदि ऋतौ इति (शरद् य् ऋतौ)शरद्यृतौ इति संहितपदम्।
२. स्मरन् चिन्तयन्नित्यर्थः। स्मृ चिन्तायाम् इति धातुपाठः।

## कालेन सर्वं परिवर्त्यंते हि

नैरपेक्ष्येण कुर्याद्धि परकार्यं सुधी जनः।
स्वेनोपकृतात्पुरुषादपि वाञ्छेन्न किञ्चन।।

यतः सिद्धिं गते कार्ये ततः पूर्वा हि वृत्तयः।
अन्यथैव भवन्तीयं लोकरीतिः पुरातनी।।

## काल सब कुछ बदल देता है

बुद्धिमान् पुरुष को चाहिये कि वह अपने द्वारा उपकृत व्यक्ति से किसी प्रकार की अपेक्षा न करते हुये उसका हित-कार्य सम्पन्न करे, उससे स्वयं कुछ भी न चाहे।

ऐसा इसलिये क्योंकि कार्य के हो जाने पर उससे पूर्व की चित्तवृत्तियाँ प्रायः अन्यथा हो जाती हैं, बिलकुल बदल जाती हैं। यह पुरानी लोक-रीति है।

कृतकृत्याद्धि पुरुषात्कृतापेक्षा न पूर्यते।
ततोऽवश्यं भवेद्दुःखं नैरपेक्ष्यमतः वरम्।।

ते वासन्तिकदिवसा विगता येषु कुसुमानि दृष्टानि।
सम्प्रत्यलेऽवशिष्टा निष्पत्रकण्टकिताः शाखाः।।

अब चूँकि कृतकृत्य पुरुष से की गई अपेक्षा पूरी नहीं होती, इस कारण से दुःख अवश्य होता है। इसलिये अपेक्षा न करना ही सर्वथा श्रेयस्कर है। इस पर रहीम का यह प्रसिद्ध दोहा याद आता है-

"काम परे कुछ और है काम सरे कुछ और।
रहिमन भाँवरि के परे नदी सिरावत मौर।।"

ओ भ्रमर! वसन्त के वे दिन चले गये जिनमें तुमने वृक्षों (पौधों) में फूल देखे थे। अब तो उनमें विना पत्तियों की कँटीली डालियाँ ही रह गई हैं। [परिवर्तन तो प्रकृति का शाश्वत नियम है भ्रमर! 'सब दिन जात न एक समान'। समय तो अनुक्षण बदलता रहता है। अतः उसके साथ सामञ्जस्य स्थापित करके ही जीवन-निर्वाह करना बुद्धिमत्ता है]।

## सदाचार-शिक्षा

सागरो मातृभूमेः पदं क्षालयन्
शिक्षयत्येव मातुः सदा वन्दनम्।
कण्टके न क्षुपाणां त्रुटिं पश्यता
शिक्षणीयं स्व-रक्षाविधानं ततः॥

सौम्यरूपेण शैत्येन लोकान् सदा
ह्लादयंश्चन्द्रमाः सर्वलोकप्रियः।
लोक एवं प्रिये शीलरूपे दधत्
सर्वलोकप्रियः स्यात्सदा सौख्यदः॥

## सदाचार-शिक्षा

मातृभूमि का पाद-प्रक्षालन करता हुआ सागर हमें मातृ-चरणों की वन्दना करना सिखाता है। कँटीले पौधों एवं वृक्षों के काँटों में त्रुटि या दोष न देखते हुये, उससे अपनी रक्षा स्वयमेव करने की सीख लेनी चाहिये।

अपने सौम्य रूप से, एवं अपनी शीतलता से समस्त लोकों को आह्लादित करता हुआ चन्द्रमा सारे लोगों का प्रिय है। इसी प्रकार सभी लोगों को अपने शील और रूप से सारे लोक को सुख देते हुये उसका प्रिय बनना चाहिये।

प्रस्तरेभ्यो दृढेभ्योऽद्रिवर्यस्य वै
दार्ढ्यशिक्षां गृहीत्वा मनस्याहरेत्।
आगतं सङ्कटं तेन दूरं क्षिपेत,
तत् स्वकीयं भवेत् स्वस्य राष्ट्रस्य वा।।

चित्तदार्ढ्यं विना नैव सङ्घर्षणं
तद्विना नैव मुक्तिर्विपद्भ्यो भवेत्।
तर्हि सङ्गृह्य दार्ढ्यं धिया धारये-
त्तद्धि शस्त्रं त्वमोघं विपन्नाशकम्।।

गिरिराज की सुदृढ चट्टानों (शिला-खण्डों) से दृढता की शिक्षा लेते हुये, उसे मन में धारण करना चाहिये। उससे अपने तथा अपने राष्ट्र पर आये हुये सङ्कट को दूर फेंक देना चाहिये।

चित्त की दृढता के बिना सङ्घर्ष नहीं किया जा सकता एवं उसके बिना विपत्तियों से मुक्ति नहीं सम्भव है। तो फिर इस दृढता को (इन शिलाओं से) ग्रहण करके मन में धारण करना चाहिये, क्योंकि विपत्तियों के नाश का यही अमोघ अस्त्र है।

## कार्पण्यं हि महादोषः

रा-धातोर्दानार्थाच्छब्दो रातिरिति साधु निष्पन्नः।
रातेरभावोऽरातिरित्यसौ कार्पण्यबोधकः॥

अरातिस्तु महाशत्रुर्नरस्यात्र न संशयः।
यतः सा दुःखजननी सर्वशर्मविनाशिनी॥

शत्रुरप्युच्यतेऽरातिर्यतो नो रात्यसौ सुखम्।
विषयेऽस्मिंश्च सादृश्यमत्यन्तं वर्तते द्वयोः॥

## अनिष्टकारिणी कृपणता

दान अर्थ वाली 'रा' धातु से 'राति' शब्द सिद्ध होता है। 'राति' अर्थात् दान का अभाव 'अराति' अर्थात् कृपणता।

कृपणता मनुष्य की महान् शत्रु है, इसमें सन्देह नहीं। ऐसा इसलिये कि यह समस्त दुःखों की जननी एवं सारे सुखों को नष्ट करने वाली है।

शत्रु को भी 'अराति' कहते हैं, क्योंकि वह सुख नहीं देता। इस विषय में कृपणता और शत्रु, दोनों में अत्यन्त साम्य है।

पूर्वेऽस्मदीया ऋषयस्तथ्यमेतत् परं विदुः।
ततस्ते सर्वथैवैच्छन् त्वरितं तत्पलायनम्॥

'उत्तिष्ठाराते! प्रपत, नेह रंस्थाः' कदाचन।
'शतहस्तः समाहर, सहस्रहस्तः सङ्किर'॥

अतोऽराति न संश्रेया यदि दुःखं नहीष्यते।
रातिरेव महापुण्यं सर्वथा सुखदायिनी॥

हमारे पूर्व ऋषि इस तथ्य से भली-भाँति परिचित थे। इसीलिये वे इसका तुरन्त सर्वथा पलायन अर्थात् भाग जाना या दूर हो जाना चाहते थे।

इसमें यह श्रुति-वाक्य प्रमाण है—'अरे कृपणते! उठ, दूर भाग जा, यहाँ न ठहर, न रह'। और भी-'हे मनुष्य! सौ हाथों से धन का सञ्चय करो और हजार हाथों से उसे पात्रों में बाँट दो।'

अतः यदि दुःख नहीं चाहते तो कृपणता को कदापि आश्रय न दो। 'राति' अर्थात् दान सर्वथा सुख देने वाला महान् पुण्य कर्म है[1]।

१. गीता में भगवान् कृष्ण ने यज्ञ, दान तथा तप को मनीषी पुरुषों को पवित्र करने वाला कहा है 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' (१८।५)।

# ईर्ष्या कष्टकरी नित्यम्

यो ह्यात्मानं हीनतरं कस्माच्चिदपि मन्यते।
असहिष्णुस्वभावत्वात् स तस्मै ध्रुवमीर्ष्यति।।

ईर्ष्यया दाहकारिण्या नित्यं सन्तप्यते नरः।
तेन कर्मण्यनुत्साहः[1] सततं यात्यधोगतिम्।।

नेर्ष्याया अधिकतरो दोषोऽस्तीह नरेऽधमे।
ततो विवेकी पुरुषो नास्यै दद्यात् पदं हृदि।।

## कष्टकारिणी ईर्ष्या

जो व्यक्ति अपने को किसी से हीन समझता है, वह अपने असहिष्णु स्वभाव के कारण उसके प्रति निश्चित ही ईर्ष्या का भाव रखता है।

ईर्ष्यालु मनुष्य दाहकारिणी ईर्ष्या से नित्य ही जलता रहता है। उसके कारण वह कर्म से उदासीन रहता हुआ निरन्तर अधोगति को प्राप्त होता है।

इस लोक में ईर्ष्या से बढ़कर कोई दोष अधम मनुष्य में नहीं हो सकता। इसलिये विवेकी पुरुष को चाहिये कि वह इसे अपने हृदय में बिलकुल स्थान न दे।

---

१. अविद्यमान उत्साहो यस्य सः, उत्साहहीन इत्यर्थः।

## गुणा एव प्रधानाः

(१)

रूपे कृष्णः स्वरे मिष्टः कोकिलः कस्य न प्रियः?
अन्तः कृष्णो बहिः शुभ्रो बकः कस्यापि न प्रियः।।

काकस्येव पिकस्यापि देहः कृष्णो नहि प्रियः।
स्वरकार्कश्यमाधुर्ये इष्टानिष्टत्वकारणे।।

गुणेष्वेव सदा दृष्टिं नैव दोषेषु निक्षिपेत्।
सुखं जीवन्त्यदोषज्ञा न छिद्रान्वेषिणो जनाः।।

## व्यक्तित्व में गुण ही प्रधान है

(१)

रूप में काला किन्तु स्वर में मधुर कोकिल किसका प्रिय नहीं होता? भीतर अर्थात् हृदय में काला और बाहर श्वेत बगुला किसी का भी प्रिय नहीं होता।

कौवा और कोयल, दोनों का ही रूप काला होने से किसी को भी प्रिय नहीं लगता। किन्तु कोयल के स्वर की मधुरता और कौवे के स्वर की कर्कशता उनके क्रमशः प्रिय और अप्रिय होने में हेतु हैं।

वस्तुतः सर्वथा व्यक्ति के गुणों पर ही दृष्टि डालनी चाहिये, दोषों पर नहीं। क्योंकि दोष न देखने वाले सुख से ज़ीते हैं जब कि दूसरों में छिद्र अर्थात् दोष खोजने वाले सदैव दुःख भोगते हैं।

(२)

गुणेष्वेतेष्वन्यतमं चाभ्यन्तरनियन्त्रणम्।
एतद्विना न सम्भाव्यं जिह्वायाश्च नियन्त्रणम्।।

परापवादसस्येभ्यश्चरन्तीं गां निवारयेत्।
एवमेकेन कृत्येन वशीकुर्याज्जगत्त्रयम्।।

लघुरपि जिह्वा गुर्वी नोपेक्ष्यातः कथमपि कदाचिदपि।
नियन्त्रितैव सम्मानमन्यथाऽवमानं दापयति।।

(२)

इन गुणों में अन्यतम गुण आन्तरिक नियन्त्रण है जिसके विना (सर्वाधिक अपेक्षित) जिह्वा का नियन्त्रण असम्भव है।

(आभ्यन्तर नियन्त्रण होने पर) दूसरों की निन्दा रूपी खेती को चरने से 'गौ' अर्थात् जिह्वा रूपी गाय को रोकना चाहिये। इस एक ही कार्य के द्वारा मनुष्य तीनों लोकों को अपने वश में कर लेता है।

छोटी सी भी जीभ बड़ी ही महत्त्वपूर्ण है, बड़े काम की है। अतएव कभी भी किसी भी तरह से उसकी उपेक्षा नहीं करनी चाहिये। नियन्त्रित रहने पर ही वह मान-सम्मान दिलाती है, अन्यथा तो तिरस्कार और अपमान।

(३)

छायामात्रं प्रसिद्धिस्तनुशुभरचनासौष्ठवं चापि पुंसः
सामान्यांशो, न चैतान्यतिशयितवरीयस्त्वमाख्यापयन्ति।
पुंसश्चारित्र्यमेवाखिलगुणगरिमा[१]पूर्णमस्त्येकवस्तु
यस्यार्थं मानवः स्याच्चिरयतनपरश्शुभ्रचेष्टा विदध्यात्।।

जगत्प्रसिद्धिर्धनवैभवादिभिर्न मानवस्य स्वकरूपमस्ति।
चरित्रमात्रं हि नरस्य रूपं तद्रक्षणीयं मणिरूपमेव।।

( ३ )

मनुष्य की प्रसिद्धि तो छाया-मात्र है, छाया के समान निस्तत्त्व है। उसके शरीर का रचना-सौन्दर्य भी उसके व्यक्तित्व का सामान्य अंश है। ये सब उसकी आत्यन्तिक वरीयता नहीं व्यक्त करते। अखिल गुणों की गरिमा से परिपूर्ण उसका चरित्र ही वह मुख्य वस्तु है जिसके लिये मनुष्य को दीर्घ काल पर्यन्त प्रयत्नशील रहते हुये शुभ कर्म करना चाहिये।

जगत् में धन, वैभव आदि कारणों से होने वाली प्रसिद्धि मनुष्य का स्वरूप नहीं है। उसका चरित्र ही उसका वास्तविक स्वरूप है, मूल्यवान् मणि रूप उसी की रक्षा उसे करनी चाहिये। मनुष्य के जीवन में उसका चरित्र ही वह मूल्यवान् मणि है जिसकी रक्षा उसे प्राण-पण से करनी चाहिये। वही उसे गरिमा-मय एवं सार्थक बनाता है।

---

१. अखिला गुणा इत्यखिलगुणाः। तेषां गरिमा, तेन आपूर्णम् इत्यखिलगुणगरिमापूर्णम्, अखिलगुणगरिमपरिपूर्णमित्यर्थः।

(४)

प्रकृतिसृष्ट-तनौ यदि मार्दवं,
सुभगता यदि वा न भवेत्ततः।
मनसि नैव कदापि मनागपि,
व्यथित कुण्ठितभावयुतो भवेत्॥

विनयवाङ्मृदुतादि-गुणा ध्रुवं,
सकलदोषनिवारणसक्षमाः[1] ।
इति विचार्य तदाप्तिरतो भवे-
न्न च कथञ्चिद्दीनमना भवेत्॥

गुणेषु सर्वातिशयी विवेको,
विवेकदीपेन यतो हि नश्यति।
प्रचण्डमज्ञानतमस्तथा च,
स्वरूपबोधः समुदेत्यनुक्रमात्॥

(४)

प्रकृति से प्राप्त शरीर में यदि सुकुमारता अथवा सुभगता (सौन्दर्य) न हो तो उससे मन में तनिक भी व्यथित अथवा कुण्ठित नहीं होना चाहिये।

विनय, मधुर वचन इत्यादि आन्तरिक गुण निश्चित रूप से सारे दोषों को दूर करने में समर्थ हैं। ऐसा विचार करते हुये उनको अर्जित करने में दत्तचित्त हो जाना चाहिये, और मन में किसी प्रकार का दैन्य-भाव नहीं लाना चाहिये।

विवेक सभी गुणों से अधिक मूल्यवान् और महत्त्वपूर्ण है, क्योंकि विवेक रूपी दीप से धीरे-धीरे प्रचण्ड अज्ञानान्धकार नष्ट हो जाता है और धीरे-धीरे स्वरूप (तत्त्व)-ज्ञान का समुदय होने लगता है।

---



१. क्षमया सामर्थ्येन सहिताः सक्षमाः समर्था इत्यर्थः।

स्वभावसौन्दर्यमनर्घरत्नं,
ततोऽपकृष्टं बहु देहसौभगम्।
न्यौन्यं परस्य प्रथमेन पूर्यते,
न्यौन्यं परेण प्रथमस्य नैव हि।।

वाङ्माधुर्यं विनीतत्वं शीलं स्नेह-परिप्लुतम्।
नरस्यान्तःसौन्दर्यं, तेन बाह्यं समर्थयेत्।।

बाह्यस्य दुर्बलत्वेन न्यूनत्वेन वा नरः।
खेदं नानुभवेत् कश्चित्, संस्मरन्नात्मसौभगम्।।

(विनयविवेकादि-जन्य) स्वभाव की सुन्दरता अत्यन्त बहुमूल्य वस्तु है। देह की सुन्दरता उसकी अपेक्षा बहुत हीन कोटि की है। दैहिक सौन्दर्य की कमी की पूर्ति तो स्वभाव के सौन्दर्य से हो जाती है किन्तु स्वभाव के सौन्दर्य की कमी देह के सौन्दर्य से कभी भी पूरी नहीं होती।

वाणी की मधुरता, विनय तथा स्नेह से ओतप्रोत स्वभाव ही मनुष्य का आन्तरिक सौन्दर्य है। उसके द्वारा बाह्य सौन्दर्य को—वह जैसा और जितना भी हो—समर्थन-सहारा देना चाहिये, उसे सबल एवं सुदृढ करना चाहिये।

आन्तरिक सौन्दर्य को स्मरण करते हुये विचारशील मनुष्य को बाह्य सौन्दर्य की दुर्बलता या न्यूनता से कत्तई और कभी भी खिन्न नहीं होना चाहिये।

# प्रतिभा प्रभुप्रसादः

यदेश्वरस्यातिकृपा मनुष्ये तदैव तस्मिन् प्रतिभा प्रकाशते।
एतच्च तथ्यं प्रसमीक्षमाणा हितेऽखिलेषां हि च तां प्रयुञ्जते।।

कुटुम्बराष्ट्रातिविशालविश्वस्यानेकलोकान् परिसेवितुं भृशम्।
तथा स्वकीयं जननं च सार्थं कर्तुं परेण प्रतिभा प्रदीयते।।

एवं स्थिते वस्तुनि तीक्ष्णबुद्धिः स्वकीयदायित्वमशेषतो वै।
निर्वोढुमेतत् प्रयतेत नित्यं भूयोऽपि जन्मान्तरलब्धिहेतोः।।

# प्रभु-प्रसाद प्रतिभा का सदुपयोग

जब ईश्वर की मनुष्य पर बड़ी कृपा होती है, तभी उसमें विलक्षण प्रतिभा का उदय होता है। इस बात पर सूक्ष्म विचार करते हुये मनीषी जन उसका सर्व-सामान्य के हित में उपयोग करते हैं।

कुटुम्ब, समाज एवं अत्यन्त विशाल विश्व के असङ्ख्य लोगों की भरपूर सेवा करने, और उसके द्वारा अपना जन्म सार्थक करने के लिये ही ईश्वर इस प्रकार की विलक्षण प्रतिभा देता है।

ऐसी वस्तुस्थिति में तीक्ष्णबुद्धि व्यक्ति को अपना यह दायित्व पूर्णतया निभाने के लिये आजीवन सतत प्रयत्न करना चाहिये ताकि जन्मान्तर में भी उसे फिर विलक्षण प्रतिभा की प्राप्ति हो सके।

## मानवजीवनस्य सार्थकता

मानवमूल्यप्राप्त्या जीवनं भवेद्धि सार्थकं परमम्।
सफलं स्यादिति चिन्ता परित्याज्या शान्तिप्राप्तये।।

शाश्वतमूल्योपेतं जीवनं स्यादिति सर्वथा यतेत।
तत्करणे साफल्यं यल्लभेत ततः सन्तुष्येत्।।

ततोऽधिकं नाभिलषेत् परमेश्वर एव विश्वसेन्नित्यम्।
यद्यावद्ध्यपेक्ष्यते तत्तावद्दास्यते तेन।।

## मानव जीवन की सार्थकता

सेवा इत्यादि शाश्वत मूल्य की प्राप्ति से ही जीवन परम सार्थक होता है। उच्च पद की प्राप्ति हो जिससे जीवन सफल हो, ऐसी साफल्य-विषयक चिन्ता शान्ति-प्राप्ति के निमित्त छोड़ देनी चाहिये, शान्तचित्त हो जाना चाहिये।

जीवन शाश्वत मूल्यों वाला बने, इसके लिये ही सब प्रकार से प्रयत्न करना चाहिये। उसे मूल्ययुक्त बनाने में जो कुछ भी सफलता मिल जाय, उसी से सन्तोष करना चाहिये।

उससे अधिक की अभिलाषा नहीं करनी चाहिये। सदैव परमेश्वर पर ही विश्वास करना चाहिये कि जिस वस्तु की जितनी अपेक्षा होगी, उस वस्तु को उतना परमेश्वर उसे अवश्य देगा।

## अर्थस्य शौचमुपयोगित्वं च

जीवननिर्वाहार्थं पुरुषेण वित्तमपेक्ष्यतेऽवश्यम्।
यद्यप्येतत्सत्यं, तथाप्यवधेयं तथ्यमिदम्।।

सोऽर्थस्त्याज्यो ज्ञेयो यत्संग्रहे प्राणिवधोऽनिवार्यः।
उताहो क्लेशोऽन्यस्य परित्यागो वा स्वधर्मस्य।।

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम्।
योऽर्थे शुचिः स हि शुचिः प्राहैवं भगवान् मनुः।।

## धर्म की पवित्रता और उपयोगिता

जीवन के निर्वाह के लिये मनुष्य को धन की अत्यधिक आवश्यकता तो है, यह सत्य है। फिर भी इसके सम्बन्ध में एक बात अवश्य ही ध्यान देने योग्य है।

जिस धन के संग्रह में जीवों की हिंसा अनिवार्य हो, अथवा दूसरे को उससे कष्ट हो, या फिर स्वधर्म का त्याग करना पड़े, वह संग्राह्य नहीं, प्रत्युत सर्वथा त्याज्य है।

इस विषय में भगवान् मनु का भी एसा कथन है कि 'सारी पवित्रताओं में अर्थविषयक पवित्रता ही सर्वश्रेष्ठ है; जो व्यक्ति अर्थ के विषय में पवित्र है, वही वस्तुतः पवित्र है'।

परस्योपरि यो जीवेदपार्थं तस्य जीवनम्।
सार्थकं जीवनं तद्धि यत् परार्थं च धार्यते।।

विद्युद्विलासचपला लक्ष्मीर्नैव निवार्या पलायनात्।
अतो लोकोपकृतये योज्यैव तावद्यावदस्ति।।

जो दूसरों पर जीवित रहता है, उसका जीना व्यर्थ है। जीवन (जीना) वही सार्थक है जो दूसरों के लिये धारण किया जाता है, दूसरों के लिये जिया जाता है।

विद्युत् की चमक (स्फुरण) के समान चञ्चल लक्ष्मी अन्यत्र चली जाने से रोकी नहीं जा सकती। अतः लक्ष्मीवान् पुरुष को चाहिये कि वह लक्ष्मी जब तक अपने पास रहे, लोक के हित में उसका उपयोग करता रहे।

## जलदः

तृप्ता जलेन गिरयस्तपनोष्मतप्ता
उद्दामदावविकलाश्च वनप्रदेशाः।
नानानदीनदसरांस्यपि पूरितानि,
रिक्तोऽद्य यज्जलद! तत्तव पूर्णताऽस्ति॥

दत्त्वा परेभ्य इह यः स्वधनं सुखेन,
पूर्त्तिं परामनुभवत्यपि रिक्ततायाम्।
तस्यैव स्वं सफलमस्ति तथा च धन्यं,
तस्यैव कीर्त्तिरचला त्विह जीवलोके॥

न तेन धनवान् कश्चित् परेभ्यो ह्रियते हि यत्।
धनवांस्तु स तेन स्याद्यदन्यस्मै ददाति सः॥

## जलद

मेघ! तुमने ग्रीष्मकालीन सूर्य की ऊष्मा से तप्त पहाड़ों, तथा उद्दाम-अनियन्त्रित-वनाग्नि से विकल वनप्रदेशों को जल की वर्षा से तृप्त कर दिया, तथा अनेक नदियों, नदों एवं सरोवरों को जल से परिपूर्ण कर दिया। अब (अर्थात् जल-वर्षण के अनन्तर) जो उससे रिक्त (खाली, रहित) हो गये हो, यही तुम्हारी पूर्णता है।

दूसरों को अपना धन सुखपूर्वक देकर, स्वयं खाली होकर भी जो परम पूर्ति का अनुभव करता है, उसी का धन वस्तुतः सार्थक है, धन्य है। इस जगत् में उसी की कीर्ति अचल है, स्थायी है, सदैव रहने वाली है।

जो धन दूसरे से हड़प या छीन लिया जाता है, उससे कोई व्यक्ति धनवान् नहीं हो जाता। धनवान् तो वह उस धन के कारण होता है जो वह दूसरे को दान कर देता है, दे देता है।

## सरोवरः

'तीक्ष्णां कण्ठविशोषणीं शमयितुं तृष्णामपां नैजिकीं
शुष्के मय्यचिरान्निदाघमिहिरैः पान्थः क्व गन्ता द्रुतम्'?
इत्येवं ननु तद्धितं स्वमनसश्चिन्तापथं प्रापयन्
धन्यो मार्ग-सरोवर! त्वमसि पान्थानां कृते क्षीणधीः॥

## मालाकारः

मालिन्! त्वया स्वकृतसेचनकर्मणा यत्
त्वेभ्यः क्षुपेभ्य इयती सलिलाधिवृष्टिः।
सम्पादिता, ननु तथा जगतीतलेऽस्मिन्
जीवातुरेव जनितो ध्रुवसत्यमेतत्॥

## सरोवर

'गले को सुखा देने वाली, जल की अपनी तीक्ष्ण (तेज) प्यास को बुझाने के लिये पथिक झट किसके पास जायगा, जब कि ग्रीष्म के प्रचण्ड सूर्य के ताप से मैं थोड़ा पहले ही सूख गया हूँ।' इस प्रकार पथिक के हित को अपनी मानसिक चिन्ता का विषय बनाते हुये, मार्ग-सरोवर! तुम धन्य हो जो (जल के लिये) अपने ऊपर आश्रित उस प्यासे पथिक के लिये विह्वल-विकल होते हो।

## माली

मालाकार! तुमने अपनी सिंचाई से इन पौधों में इतना अधिक जल-वर्षण किया कि निस्सन्देह वैसा करके इन्हें जीवन ही दे दिया। यह ध्रुव-सत्य है। जल तो वस्तुतः जीवन ही है (इसी से 'जीवन' शब्द जल और जीवन, दोनों का ही वाचक है)।

## मानो हि महतां धनम्

जनोऽपि मृद्नाति चयं हि भस्मनां
न तु ज्वलन्तं दहनं कदाचन।
असूनतः प्रोज्झति मानभृन्नरो
न धाम मानस्य हि मर्दनाद्भियः।।

याच्ञा हि लाघवकरीति महाक्रमो[1]ऽपि
रूपं लघु प्रथममेव चकार सद्यः।
तस्मान्मनीषिपुरुषा नहि याचितारो
मानं च गोपितुमतो नहि ते समर्थाः।।

## स्वाभिमान ही बड़ों का धन है

आदमी भी भस्म की राशि (ढेर) को ही पैरों-तले कुचलता है, जलते हुये अग्नि को कदापि नहीं। इसीलिये मानी पुरुष प्राणों को त्याग दे सकता है किन्तु मान-मर्दन के भय से अपने तेज को कदापि नहीं।

याचना निश्चित ही लघुता उत्पन्न करने वाली है, इस कारण से अपने तीन पदों (पगों) में सारे ब्रह्माण्ड को नाप लेने वाले भगवान् विष्णु को भी याचना-पूर्व ही लघु (वामन) रूप धारण करना पड़ा। इसीलिये बुद्धिमान् पुरुष याचक होना नहीं स्वीकार करते, क्योंकि इस (याचना) के कारण वे सम्मान की रक्षा में समर्थ नहीं हो पाते।

---



१. महान्तःक्रमाः पादन्यासा यस्य सः महाक्रमः उरुक्रमो वामनविष्णुरित्यर्थः।

ध्वनन्मेघान्न सहते, प्रति प्रार्थयते हरिः।
प्रकृतिः सा महीयसां, परोन्नत्यसहा हि ते॥

सिंह गरजते हुये मेघों के प्रति दहाड़ता हुआ, जो आक्रमण करता हुआ दिखाई पड़ता है, वह उसकी प्रकृति है, स्वभाव है। सबसे बड़ा (अर्थात् बढ़कर) होने की प्रकृति वाले दूसरों का अभ्युदय नहीं सह पाते।

## विनय

हृदि येषां दयाधर्मौ, वाचो येषां सुधामुचः।
सूत्तमाः पुरुषास्ते वै नेत्रे येषां सदा नते।।

वीतावलेपो मृद्वीं वाचमुच्चारयन्नरः।
सर्वथा ह्लादयत्यन्यान् स्वयं च सुखमश्नुते।।

## विनय

जिनके हृदय में दया और धर्म है, जिनकी वाणी अमृतवर्षिणी है, एवं जिनके नेत्र सदा नीचे झुके रहते हैं, वे ही उत्तम पुरुष हैं।

मनुष्य को गर्व-रहित होकर मृदु वचन बोलना चाहिये। इस प्रकार से वह औरों को तो सुख देता ही है, साथ ही स्वयं भी सुख का अनुभव करता है।

यदोत्थितौ करौ दाने तदैव नयने नते।
अद्भुता दानरीतिर्हि सर्वथैव महात्मनाम्।।

वस्तुतस्तु प्रभुर्दाता ततो नेत्रे नते सताम्।
दानदाता यदान्योऽस्ति कुतो गर्वः समञ्जसः।।

महापुरुषों के हाथ दान देने के लिये ज्यों ही उठते हैं, तभी उनके नेत्र झुक जाते हैं। सचमुच उनकी दान-रीति निराली होती है।

चूँकि वस्तुतः दाता तो प्रभु हैं, इसी से सत्पुरुषों के नेत्र नीचे झुक जाते हैं। जब दान का दाता दूसरा कोई हो, तो उस पर गर्व करना किस तरह से (कैसे) युक्त या उचित है।

## सत्पुरुष-लक्षणम्

(१)

ते हि महान्तः सन्तो ये सन्ति सदा हरिचरणेषु रताः।
जगदिदं ब्रह्मैवेति न केनापि विरोधो येषाम्।।

साधूनां किमसह्यं क्षमा[1]स्ते सर्वमसत्कृतं सोढुम्।
सन्तस्त एव ग्राह्या येषां नैव दुस्सहं किमपि।।

## सन्त के लक्षण

(१)

वे ही महान् सन्त हैं जो सदैव भगवच्चरणों में निरत रहते हैं, एवं जिनका किसी से भी यह सोच कर विरोध नहीं होता कि यह सारा जगत् तो ब्रह्म ही है, फिर किसके साथ विरोध?

साधुओं के लिये असह्य क्या है? वे दुर्जनों के सारे दुर्व्यवहार, सारे असत् व्यवहार को सहने की सामर्थ्य रखते हैं। साधु तो वे ही समझे जाने योग्य हैं जिनके लिये कुछ भी दुस्सह नहीं।

१. क्षमन्ते इति क्षमाः समर्था इत्यर्थः।

सन्तस्त्वाम्रास्तरवो ये परहिताय पुष्पफलानि दधति।
इतः पाषाणैर्हतास्ततो मधुरफलान्येव ददति।।

हितकर्तारः सन्तः स्वभावेनैव परहितमाचरन्ति।
तत्र यशः स्वर्गो वा न कथञ्चिदपि कारणं भवति।।

भद्रः सङ्कल्प एव शुभकर्माचरणे भवति कारणम्।
स च पूते मनस्येव तन्मनोऽप्यस्ति सतामेव।।

सन्त तो वे सुन्दर आम्रवृक्ष हैं जो दूसरों के लिये फूलते-फलते हैं एवं इधर से पत्थरों से मारे जाने पर बदले में उधर से मधुर फल ही देते हैं।

दूसरों का हित करने वाले सन्त स्वभाव से ही पर-हित करते रहते हैं। उनके उस कार्य में न तो यश और न ही स्वर्ग किसी प्रकार से कारण बनता है।

शुभ सङ्कल्प (दृढ़ विचार) ही अच्छे कार्य के सम्पादन में कारण बनते हैं। वह सङ्कल्प पवित्र मन में ही होता है, और वह मन भी सन्तों के ही पास होता है।

(२)

त्रिगुणात्मिकेयं सृष्टिर्गुणदोषमयी ततः।
सन्तो दोषान् परित्यज्य गुणान् गृह्णन्ति केवलम्।।

विकारहेतौ सत्यपि साधवः शून्यविक्रियाः।
नित्यं परिवृते सर्पैश्चन्दने नैव तद्विषम्।।

प्रारब्धेन कुसङ्गेऽपि पतिताः साधवो जनाः।
स्वभावं नैव जहति यथा फणिमणिः शुचिः।।

(२)

यह सृष्टि त्रिगुणात्मिका होने से, गुण एवं दोष दोनों से ही युक्त है। साधु पुरुष वे हैं जो दोषों का परित्याग करके केवल गुणों को ही ग्रहण करते हैं, गुणों को ही अपनाते हैं।

विकारों के कारणों के होने पर भी साधु पुरुष विकारों से शून्य (रहित) ही रहते हैं। विषधर सर्पों के सदैव लिपटे रहने पर भी, चन्दन में उनका विष व्याप्त नहीं होता।

प्रारब्ध-वश कुसङ्ग में पड़ने पर भी साधु पुरुष सर्प के पवित्र मणि की भाँति ही अपना स्वभाव कदापि नहीं छोड़ते। वे पवित्र ही बने रहते हैं।

(३)

नित्यं विभान्त्यखिललोकहितं चरन्तः
सन्तो वसन्त इव, साधुजनैः परीताः।
सर्वं विहाय हरिपादरजस्सु मग्ना
लग्नाः सुकर्मसु सदा विचरन्ति लोके।।

वृत्तिः प्रिया भवति साधुजनस्य नित्यं,
वाणी सदैव मधुरा विनयान्विता च।
चेतो दयार्द्रमति कल्यमयी मतिश्च,
जीयाद्रहस्यचरितं नितरां सतां वै।।

(३)

ऋतुराज बसन्त की भाँति समस्त लोगों (या लोकों) का हित करते हुये, साधु पुरुषों से घिरे हुये सन्त सदा प्रकाशमान रहते हैं, शोभित होते हैं। वे सब कुछ छोड़ सदा हरि-चरणों में मग्न एवं सदाचार में निरत रहते हुये लोक में निरन्तर विचरण करते रहते हैं [परिव्रजन करते हुये किसी भी एक स्थान पर गोदोहन-काल से अधिक समय तक ठहरते नहीं ]।

सन्तों का व्यवहार सदैव सभी को प्रिय लगने वाला होता है, उनकी वाणी सदैव मधुर, एवं विनय से युक्त अर्थात् संयत और नियन्त्रित होती है। उनका चित्त दयार्द्र एवं बुद्धि अत्यन्त कल्याणमयी होती है। सत्पुरुषों का ऐसा रहस्यमय चरित आत्यन्तिक रूप से विजयी हो, उत्कर्ष प्राप्त करे।

सिद्धान्तसाधितधियोऽपि शिशुस्वभावा
[1]वैविक्तिका अपि सदा सुजनैः परीताः।
शास्त्रार्थतत्त्वगुरवोऽपि कथारसज्ञाः
सन्तो मनोज्ञचरिता विबुधाग्रगण्याः॥

सिद्धान्तों के गम्भीर चिन्तन से संस्कार-सम्पन्न बुद्धि वाले होकर भी शिशु के समान सहज-सरल स्वभाव वाले, एकान्त-प्रेमी होकर भी सदैव सज्जनों से घिरे रहने वाले, शास्त्रों द्वारा प्रतिपादित गम्भीर तत्त्वों के गुरु (ज्ञाता, उपदेशक) होकर भी कथा-रस के तत्त्वज्ञ, एवं सुन्दर चरित वाले सन्त विबुधों-मनीषियों और देवों-में अग्रगण्य होते हैं।



१. विविक्तमेकान्तं सेवन्ते इति, एकान्तवासिन इत्यर्थः।

(४)

वाणी मृद्वी च माध्वी प्रियसरससुधासारकर्त्री[1] च दृष्टिः
आचारः शिष्टमिष्टो प्रियमधुरमनोभावपूर्णा च बुद्धिः।
स्निग्धा संवेदना स्यादखिलजनकृते यस्य नैसर्गिकी च
तादृग्यस्यास्ति मूर्तिर्जनितजनसुखा[2]ऽसौ पुमान् सार्थजन्मा।।

शुद्धा अन्तःकरणे सन्त एवात्मानुसन्धानपराः।
तेष्वपि विरलः कश्चन कालक्रमेणैवात्मज्ञः।।

समे[3]महान्तो विचरन्ति भूतले
वसन्तवल्लोकहितं च कुर्वते।
स्वयं च तीर्णा भवसागरं जना-
नहेतुनाऽन्यानपि तारयन्ति च।।

(४)

जिसकी वाणी सुकुमार और मधुर है, जिसकी दृष्टि प्रिय, स्निग्ध एवं अमृत की वर्षा करने वाली है, जिसका आचरण शिष्ट एवं सुखद है, जिसकी बुद्धि प्रिय एवं मधुर मनोभाव से परिपूर्ण है, जिसकी स्नेहपूर्ण संवेदना स्वभावतः प्राणी-मात्र के प्रति रहती है, तथा सभी को सुख देने वाला जिसका ऐसा स्वरूप है, उसी का जन्म लेना सार्थक है।

अन्तःकरण में शुद्ध सन्त ही आत्मचिन्तन-परायण होते हैं। उनमें कोई विरला ही कालक्रम से आत्म-ज्ञान प्राप्त कर पाता है।

सभी महापुरुष सन्त ऋतुराज बसन्त की तरह समस्त लोक का हित-सम्पादन करते हुये पृथ्वी पर विचरण करते रहते हैं। वे स्वयं तो भवसागर पार किये ही रहते हैं, अपने सत्सङ्ग से अन्य जनों को भी ज्ञान देकर पार करा देते हैं।

---

१. प्रियसरस०-प्रिया च सरसा च सुधासारकर्त्री चेति।
२. जनित०-जनानां सुखं जनसुखम्। जनितं जनसुखं यया सा।
३. समे सर्वे इत्यर्थः।

धन्यास्ते पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
न स्वीयो न परश्च कोऽपि पुरुषो यन्मानसे वर्तते।
ब्रह्मण्येव च ये स्थिरेण मनसा सर्वत्र साम्ये स्थिता-
स्ते सत्यं पृथिवीमिमां स्वजनुषा कुर्वन्ति धन्यां खलु।।

वे महापुरुष धन्य हैं जो निःस्वार्थ भाव से सामान्य रूप से दूसरों का हित साधते हैं। उनके मन में अपने-पराये का भाव बिलकुल ही नहीं रहता। जो सन्त सभी काल और देश में समभाव से सर्वव्यापी ब्रह्म में स्थिर मन से स्थित रहते हैं, वे ही सचमुच इस पृथ्वी को अपने जन्म से धन्य (महिमान्वित, गौरवान्वित) बनाते हैं, इसमें सन्देह नहीं।

ऐसे एकभक्ति, ज्ञानी सन्त को भगवान् ने गीता में दुर्लभ कहा है-

'वासुदेवः सर्वमिति, स महात्मा सुदुर्लभः[१]'।



१. गीता ७।१२।

## स्थित-प्रज्ञ

विषादविष-पानं यः कर्तुं जानाति हर्षतः।
न चोद्विग्नमना जातु स हि जानाति जीवितुम्।।

एवं हर्षामृतं पातुं शक्तो मर्यादया सह।
स एवास्ति महानात्मा स्थितप्रज्ञः स उच्यते।।

अत्रादर्शो हि रामस्य वर्तते लोकविश्रुतः।
योऽभिषेकेण नो हृष्टो न च क्षुब्धो वनं व्रजन्।।

सम्पत्तौ च विपत्तौ च महतामेकरूपता।
इत्येतन्मात्र आदर्शो वर्तते विदितात्मनाम्।।

## स्थिरचित्त का सही जीवन

जो विषाद-रूपी विष को हर्षपूर्वक पी लेना जानता है और कभी भी उद्विग्न नहीं होता, वही स्थिरबुद्धि महापुरुष है, एवं सही जीवन जीना जानता है।

इसी प्रकार, जो हर्ष रूपी अमृत को अट्टहास नहीं प्रत्युत मर्यादा के साथ पीने में समर्थ होता है, वही महापुरुष की कोटि में गणनीय है। वह स्थिर-बुद्धि पुरुष 'स्थित-प्रज्ञ' की संज्ञा प्राप्त करता है।

इस विषय में भगवान् राम का आदर्श लोक-प्रसिद्ध है जो राज्याभिषेक के समाचार से न तो प्रफुल्लित हुये और न ही वनगमन के समाचार से क्षुब्ध या दुःखी।

वस्तुतः महापुरुष सम्पत्ति और विपत्ति में एक-समान रहते हैं। आत्मज्ञ पुरुषों का यही जीवनादर्श है।

## जिजीविषया मृत्युभयम्

जीवे जिजीविषा नित्यं वर्तते यत्ततो भृशम्।
मृत्योर्मज्जीवनं नश्येदिति मत्वा बिभेत्यसौ।।

यावज्जिजीविषा जीवे दुर्धर्षाऽप्यनुवर्तिनी।
तावदेव भयं तस्य नित्यं मृत्योर्न संशयः।।

जातस्य हि ध्रुवो मृत्युरिति यद्भगवद्वचः।
तन्नित्यं स्मरतो जन्तोर्दुर्बला सा जिजीविषा।।

## जीने की इच्छा से मृत्यु-भय

जीव में चूँकि जीने की इच्छा नित्य होती है, अतएव वह यह सोच-सोच कर अत्यन्त भयभीत रहता है कि 'मृत्यु (काल) मेरा जीवन नष्ट कर देगा'।

जब तक दुर्धर्ष जिजीविषा प्राणी का पीछा नहीं छोड़ती, तभी तक उसे मृत्यु से भय बना रहता है, यह बात तय है।

उत्पन्न हुये प्राणी की मृत्यु निश्चित है। इस भगवद्-वचन का नित्यशः स्मरण करते रहने से वह जिजीविषा अवश्य ही दुर्बल (शिथिल) होती है।

शनैः शनैर्विचारेण लयं प्राप्नोति सा यदा।
तदा मृत्योर्भयाज्जीवो मुक्तो भवति निश्चितम्।।

ईदृग्विचारसम्पन्नो यो मनः साधयेच्छनैः।
स एव सत्पुरुषः स्यान्मुक्तो मृत्युभयात् किल।।

गम्भीर विचार से जब वह जिजीविषा धीरे-धीरे समाप्त हो जाती है, तब जीव मृत्यु के भय से अवश्य मुक्त हो जाता है।

ऐसे सद्विचार से सम्पन्न जो पुरुष अपने मन को धीरे-धीरे साध लेता है, वही सत्पुरुष है, वही सन्त है और वही निस्सन्देह मृत्यु के भय से मुक्त भी हो पाता है।

## जननी

स्त्रियो विकासस्य परा हि काष्ठा
मातृत्वमस्तीति नितान्तसत्यम्।
कुक्षौ स्वकीये सुतधारणाद्धि
माता तदाधार इति प्रयोगः॥

मातुश्च शब्दो धृ[1]तसप्तमीको
भवत्यनेनैव हि कारणेन।
प्रजापतेः सृष्टिप्रपञ्चकार्ये
साह्यप्रदानेन गरीयसी सा॥

## जननी

मातृत्व स्त्री के विकास की पराकाष्ठा है, यह ध्रुव सत्य है। सन्तान को अपनी कोख में धारण करने के कारण ही माता उसका आधार कही जाती है।

'आधार' की अधिकरण संज्ञा होने से ही माँ के लिये प्रयुक्त शब्द में सप्तमी विभक्ति लगती है। प्रजापति के सृष्टि-विस्तार में सहायक होने से ही माँ का महत्त्व सभी से बढ़कर है।

---

१. 'सप्तम्यधिकरणे च।'-अष्टा०

न केवलं सा सुतजन्मदात्री
आदर्शसंस्कारजनिं करोति।
आदर्शरामस्य हि जन्मना सा
त्रिलोकधात्रीपदमर्हतीति॥

मातृत्वं वरदानमस्ति महिलानां गौरवायेति वै
तत् सत्यं महिलात्वमण्डनकरं, तत्रास्ति कः संशयः?
वैवश्येन परं यदा हि महिला शुल्काय कुक्षिं निजां
दत्तेऽन्यस्य कृते[1] तदा [2]कृतमदोऽवश्यं जघन्यं महत्॥

वह सन्तान को केवल जन्म ही नहीं देती अपितु उसमें आदर्श संस्कार भी डालती है। राम जैसे आदर्श पुत्र को जन्म देने के कारण वह त्रिलोक-धात्री के पद का सम्मान पाने योग्य है।

मातृत्व महिलाओं के गौरव के लिये निश्चित रूप से वरदान है। सचमुच ही वह महिलाओं के लिये मण्डनकारी है, इसमें संशय कहाँ? किन्तु जब कोई महिला किसी विवशता या लाचारी के कारण अपनी कोख किसी अन्य को किराये पर दे देती है, तो उसका यह कार्य अवश्य ही अत्यन्त निन्दनीय है।

---

१. लिए।

२. कृ + क्तः (नपुंसके भावे)। कृतं कार्यमित्यर्थः।

## जन्मभूमिः

माता धरित्री च तथैव सृष्टे-
राधारभूतास्ति च तस्य हेतोः।
गरीयसी मातृसमैव सर्वै-
र्विदग्धलोकैरवगम्यते हि॥

सा जन्मदात्री जननी च जन्म-
भूमिश्च स्वर्लोकसमे प्रसिद्धे।
लोकं दधातीति धरेति संज्ञा
भूमिस्तथा [1]गुर्व्यधिकं द्युलोकात्॥

स्वजन्मभूमिः प्रियमातृभूमि-
र्यतो हि सा मातृसमं दधाति।
अस्मान् स्वपुत्रान् फलवारिखाद्यै-
र्वन्द्या ततः सा निजभक्तपुत्रैः॥

## जन्मभूमि

धरती माँ भी लोक को धारण करने के कारण, उसका आधार है। सभी विज्ञ जनों के द्वारा वह अपनी माँ के समान ही पूज्य गरिमामयी मानी-समझी जाती है।

जन्मदात्री जननी एवं जन्मभूमि, दोनों ही स्वर्ग के समान प्रत्युत उससे भी अधिक गरिमामयी हैं, पूज्य हैं। मनुष्य-लोक को धारण करने के कारण ही पृथिवी माता की 'धरा' संज्ञा है जो स्वर्गलोक से भी बढ़कर है।

अपनी जन्मभूमि प्रिय मातृभूमि ही है क्योंकि वह माता के समान ही हम पुत्रों का अपने फल, जल, भोजनादि से पोषण करती है। इसलिये वह अपने भक्त पुत्रों द्वारा सदैव वन्दना करने योग्य है।

१. गुर्वी = गुरु + ङीष् (स्त्रियाम्) अर्थात् महत्त्वपूर्ण, महिमान्वित।

## माताऽस्मदीया

(१)

माताऽस्मदीया निजजन्मदात्री
अस्मांश्च सर्वान्निजदुग्धदानैः।
उद्वर्तनाभ्यङ्गमृजादिभिश्च
सम्पोष्य नित्यं बलिनः करोति।।

मातुः कृपायाः फलमत्युदात्तं
तत्सन्ततिर्द्राग्लभते सुखेन।
सेयं च माता निजगेहदेवी
पूज्या च वन्द्या च सदेति बोध्यम्।।

सा चेत्प्रसन्ना किमलभ्यमस्ति
शुश्रूषया तां परितोषयेत्तत्।
प्रीता यदि स्याद् गृहदेवतेयं
प्रीता भवेयुः खलु सर्वदेवाः।।

## मेरी माँ

(१)

हमारी माता हम सभी लोगों को जन्म देकर अपने दूध से, तथा उबटन, मालिश एवं स्नानादि क्रियाओं से नित्य पुष्ट करती हुई बलवान् और सुदृढ़ बनाती है।

माता की कृपा का उदात्तफल उसकी सन्तति अनायास ही शीघ्र पा जाती है। यह माँ अपने घर की देवी है, अतएव वह सदैव पूजनीय और वन्दनीय है, ऐसा जानना चाहिये।

यह गृह-देवी यदि प्रसन्न है तो जीवन में कुछ भी इष्ट वस्तु अलभ्य नहीं है। इसलिये उसे अपनी सेवा-शुश्रूषा से सन्तुष्ट रखना चाहिये। यदि यह गृह-देवी प्रसन्न हो गई तो निश्चित रूप से सारे देवता प्रसन्न होंगे।

(२)

मातर्मदीये! मम जन्मदात्री
स्तन्यं स्वकीयं बहु पाययित्वा।
सम्पोष्य मां दत्तवती चिरं शं
स्वयं महद्दुःखमवाप्य मह्यम्।।

नाहं न जाने तव सेवयाम्ब!
पुष्टोऽहमद्यापि दधाम्यसूंश्च।
अस्ति त्वदीयं परमर्णमेवं
सत्यं न जाने प्रतियातनं किम्।।

वर्षेऽष्टमे मे त्रिदिवं गता त्वं
तेनाहमत्यन्तविषण्णचित्तः ।
अद्यापि पारं न गतोऽस्मि दुःख-
स्यातिप्रमाणस्य महोदधेर्हि।।

(२)

मुझे जन्म देने वाली मेरी माँ! तुमने अपना प्रभूत दुग्ध पिला कर, स्वयं मेरे लिये बहुत दुःख उठा कर मेरा पालन-पोषण करती हुई चिरकाल तक अत्यधिक सुख दिया।

माँ! मुझे यह तथ्य अज्ञात नहीं है कि तुम्हारी सेवा-शुश्रूषा से पुष्ट होकर ही मैं आज तक जीवित हूँ। इस प्रकार मुझ पर तुम्हारा महान् ऋण है। इसे कैसे उतारा जाय, यह मैं सचमुच नहीं जानता।

मेरे आठवें वर्ष में तुम दिवङ्गत हो गई जिससे मुझे अपार दुःख हुआ। दुःख के उस अपार समुद्र के पार मैं आज तक न जा सका।

सेवा न मातर्विहिता त्वदीया
ततोऽस्ति चित्तेऽतिमहान् विषादः।
सम्प्रत्यृणस्य स्मृतिरेव शक्या
तां त्वं गृहाणाम्ब! कृतज्ञतां मे।।

स्मृतिं त्वदीयां परमं पवित्रा-
माजीवनं रक्षितुमायतिष्ये।
यथा दरिद्रेण निजं हि वित्तं
प्राणव्ययेनापि सुरक्ष्यते वै।।

मातस्त्वदीया ममताघटा मां
चिराय सिक्तं न शशाक कर्तुम्।
आयुष्यमल्पं चिररुग्णता च
हेतू अभूतामवशा वयं च।।

माँ! मैं तुम्हारी कुछ भी सेवा न कर सका। इसका महान् दुःख चित्त में आज भी रहता है। आज तुम्हारे ऋण की केवल स्मृति ही सम्भव है। मेरी माँ! तुम अपने पुत्र पर कृपा करके उसे ही उसकी कृतज्ञता के रूप में स्वीकार कर लो।

तुम्हारी परम पवित्र स्मृति को मैं आजीवन सुरक्षित रखने का उसी प्रकार प्रयत्न करूँगा, जैसे कोई दरिद्र अपना प्राण देकर भी अपनी यत्किञ्चित् पूँजी को सुरक्षित रखता है।

माँ! तुम्हारी ममता की घटा तुम्हारे लाल को बहुत अधिक समय तक स्नेह-सिक्त नहीं कर सकी। इसमें तुम्हारी चिरकालिक रुग्णता और उस कारण से तुम्हारा अल्पायुष्य कारण बने। उसके समक्ष हम सभी (भाई एवं पूज्य पिता इत्यादि) विवश हो गये।

## प्रेमैव खलु सारम्

शुद्धं परप्रेम हि लोकमध्ये
परस्परं विद्यत एव यावत्।
तावन्न काचिद्ध्युदियात् समस्या
उदेति चेत्तर्हि समाहिता स्यात्।।

प्रेमैव सारं खलु जीवलोके
तदेव नित्यं स्पृहणीयमस्ति।
तदेव संघर्षसमाधिरस्ति
तदेव मुख्यो हि सुशान्तिहेतुः।।

## जीवन का सार-प्रेम

सभी लोगों में जब तक परस्पर शुद्ध प्रेमभाव है, तब तक कोई भी समस्या उदित नहीं होती, और कदाचित् उदित भी हो जाय तो उसका समाधान भी हो जाता है।

प्रेम ही निस्सन्देह जीवलोक का सार है, अतः वह सर्वदा स्पृहणीय (प्राप्तव्य) है। वही सारे पारस्परिक सङ्घर्षों का समाधान है एवं वही लोगों की सुख-शान्ति का मुख्य हेतु है।

पारस्परिकसम्बन्ध-जातां कटुतां शमयितुं केवलम्।
प्रेम्णः केचिच्छब्दाः प्रायशो भवन्ति पर्याप्ताः।।

कालेऽस्मिन् स्वजनेभ्यो न जनास्ताञ्छब्दानुच्चारयन्ति।
ददति च न तन्महत्त्वं यदपेक्ष्यते जीवने जनैः।।

पारस्परिक सम्बन्धों में उत्पन्न कटुता को दूर करने के लिये प्रायः प्रेम के कुछ शब्द ही पर्याप्त होते हैं।

परन्तु वर्तमान समय में लोग अपने लोगों के लिये उन कुछ शब्दों को भी नहीं बोलते, और न ही उन लोगों को वह महत्त्व देते हैं, जिसकी अपेक्षा उन्हें जीवन में सदैव रहती है।

## प्रेम्णः स्वरूपम्

प्रेम पारकरं वस्तु लौकिकं वाप्यलौकिकम्।
निःस्वार्थमेव शुद्धं च प्रेमास्ति स्वसमर्पणम्।।

समर्पणं प्रिये स्वीये स्वीयस्वत्वविलोपनम्।
सङ्कीर्णा प्रेमवीथ्यस्ति न द्वौ धारयितुं क्षमा।।

## प्रेम का स्वरूप

प्रेम तो पार करने वाला परम तत्त्व है, वह प्रेम चाहे लौकिक हो या अलौकिक। उसे केवल निःस्वार्थ और शुद्ध (निश्छल) होना चाहिये। ऐसे प्रेम की कसौटी है आत्मसमर्पण।

अपने प्रिय के लिये 'समर्पण' का तात्पर्य है अपने स्वत्व का विलोपन, अपनी सत्ता या स्वत्व (खुदी) को प्रिय के 'स्व' में विलीन कर देना। प्रेम की गली इतनी सँकरी होती है कि उसमें दो एक-साथ रह ही नहीं सकते। इसकी समर्थक उक्ति याद रखने योग्य है- "प्रेमगली अति साँकरी जामें दो न समायँ"।

सत्यं प्रेम तदेवास्ति यत् स्वार्थरहितं भवेत्।
स्वार्थे स्वत्वं ध्रुवं तर्हि कुतोऽभेदो द्वयोर्भवेत्।।

इदमस्ति स समुद्रो यो ब्रुडित्वैव पार्यते।
प्रेमोदधेर्विचित्रेयं रीतिर्लोके न दृश्यते।।

सत्य प्रेम तो वही है जो निःस्वार्थ हो। स्वार्थ में तो 'स्व' रहता ही है, तब दोनों में वह अभेद कहाँ रहेगा, वह एकात्मता कहाँ रहेगी जो आदर्श प्रेम का प्राण है, उसका सर्वस्व है।

यह प्रेम वह समुद्र है जिसमें डूब कर ही पार हुआ जाता है। प्रेम-समुद्र की यह विचित्र रीति है जो लोक में सामान्यतः नहीं दिखलाई पड़ती।

## प्रेम्णः प्रतीकम्

प्रियतमनीरवियोगं सोढुमशक्तोऽसीति मन्ये पङ्क!
नो चेत्ततो वियुक्तो विदीर्णहृदयः कथं जातः??

धन्योऽसि पङ्क! यस्त्वं बहिः कृष्णोऽप्यन्तरे शुभ्रोऽसि।
नीरे शुष्के जाता तव दीर्णतैवास्य साक्षिणी।।

पवित्रं प्रेम्णो यद् व्रतमवधृतं चातक! दृढं
न दृष्टं तल्लोके क्वचिदपि च लोकोत्तरमिदम्।
जगत्सारः प्रेमा परम इति सारग्रहणतः
कृता सार्था [1]'सारङ्ग' इति किमु संज्ञा तव खग!!

## प्रेम-प्रतीक

पङ्क! अपने प्रियतम 'जल' का वियोग सह सकने में तुम समर्थ नहीं हो, ऐसा लगता है। यदि ऐसा न होता तो उससे वियुक्त हो जाने पर तुम्हारा अभ्यन्तर क्यों फट जाता? (जल सूख जाने पर जलाशयों का कीचड़ फट जाता है)।

पङ्क! तुम सचमुच धन्य हो, क्योंकि बाहर (ऊपर) से काले होकर भी भीतर (अभ्यन्तर में) श्वेत-सात्त्विक हो। नीर के सूख जाने पर उसके वियोग में तुम्हारे अभ्यन्तर (हृदय) का फट जाना, खण्ड-खण्ड हो जाना इसका प्रमाण है, साक्षी है।

चातक! पवित्र प्रेम का जो दृढ़ व्रत तुमने लिया, यह लोकोत्तर है क्योंकि लोक में तो यह कहीं भी दृष्टिगोचर नहीं होता। प्रेम ही जगत् का सार-श्रेष्ठ तत्त्व-है। इस तत्त्व को ग्रहण करने के कारण ही क्या तुम्हारा 'सारङ्ग' नाम पड़ा?



१. सारं गच्छति प्राप्नोतीति सारङ्गः।

## समत्वं प्रेम्णो मूलम्

(१)

कौन्तेय! सर्वाशयसन्निविष्ट
आत्मस्वरूपेण स्थितोऽहमस्मि।
इति स्ववाचा भगवान् स्वयं हि
सत्यापयत्येव, समा हि सर्वे।।

आत्मोपमत्वं खलु जीवमात्रे
यः प्रेक्षतेऽसौ रतिमेव तस्मिन्।
कुर्यादवश्यं न च संशयालु-
र्दत्ता तथाधारशिला च प्रेम्णः।।

## प्रेम का मूल–आत्मौपम्य

(१)

'अर्जुन! मैं सभी प्राणियों के हृदय में प्रविष्ट होकर आत्मरूप से स्थित हूँ। भगवद्गीता में प्रोक्त अपने इस वचन से भगवान् श्रीकृष्ण ने स्वयं ही इस बात को प्रमाणित कर दिया है कि सभी प्राणी समान हैं, बराबर हैं।

प्राणी-मात्र में जो इस समत्व (आत्मौपम्य) को देखता है, वह इसमें तनिक भी सन्देह न करता हुआ, उससे प्रेम (प्रीति) अवश्य करेगा। इस प्रकार समत्व की भावना से प्रेम की आधार-शिला (नींव) पड़ती है।

यथा यथात्मा परिचीयतेऽसौ
सत्यस्वरूपे, गतसंशये हि।
तथा तथा प्रेम सुखस्वरूपम्
प्रभावशीलं खलु जीवने स्यात्॥

तदा ध्रुवं सार्वजनीनकार्यं
भवेदनायासमशेषतश्च ।
एवं च लोकस्य हि संग्रहेण
मनुष्ययोनौ खलु जन्म सार्थम्॥

इस प्रकार ज्यों-ज्यों आत्मा अपने संशय-रहित वास्तविक स्वरूप में ज्ञात होता जाता है, त्यों-त्यों जीवन में सुख-स्वरूप प्रेम निश्चित रूप से प्रभावकारी होता जाता है।

उस स्थिति में सभी के हित के सारे कार्य अनायास ही, विना प्रयत्न ही, होने लगते हैं। इस प्रकार ज्ञानी प्रेमी के जीवन से 'लोकसग्रह'-लोकहित-के जुड़ जाने से, उसका मनुष्य-योनि में जन्म लेना सार्थक हो जाता है।

(२)

सृष्टिर्हि सर्वा परमात्मनोऽस्ति
यस्तस्य स्वीयोऽस्ति समर्पितात्मा।
सृष्टिः स्वकीया भवतीह तस्य
यथा पितुः सम्पज्जातकस्य।।

यदा च सर्वा वसुधा स्वकीयो
भवेत् कुटुम्बो, न परः कथञ्चित्।
तदा परित्यज्य ससीमतां स्वां
विस्तारमाप्नोति चितिर्हि जन्तोः।।

तदेव व्यक्तिर्भवतीह भूमा
सुखस्वरूपोऽखिलशोकहीनः।
तदा ह्यसौ जीवन एव मुक्ता
देहे विनष्टे च विदेहमुक्ता।।

(२)

वस्तुतः सारी सृष्टि तो परमेश्वर-कृत होने से उसी की है। अतः जो व्यक्ति उसके प्रति समर्पित होने के कारण उसका अपना है, सारी सृष्टि ही उसकी अपनी हो जाती है जैसे पिता की सारी सम्पत्ति उसके पुत्र की।

और जब सारी सृष्टि, सारी वसुधा उसका अपना कुटुम्ब हो जाती है, पराया नहीं रह जाती, तब व्यक्ति का चिद्रूप आत्मा जीवावस्था की ससीमता, लघुता का परित्याग करके अपने वास्तविक विभुत्व को, अपनी व्यापकता को, प्राप्त कर लेता है।

उस समय व्यक्ति लघुता-जन्य सारे दुःखों से छुटकारा पाकर सुखस्वरूप, आनन्द स्वरूप 'भूमा' अर्थात् सर्वव्यापी ब्रह्म हो जाता है। इस प्रकार वह व्यक्ति जीवन में ही मुक्त हो जाता है, जीवन्मुक्ति प्राप्त कर लेता है और देह के नष्ट हो जाने पर विदेह-मुक्ति भी।

## प्रेम्णैव मुक्तिः

(१)

महत् कष्टकराः सर्वे सम्बन्धाः स्नेहसंश्रिताः।
तद्वियोगे निखन्यन्ते हृदये शोकशङ्कवः।।

परात्मनि परं प्रेम निश्श्रेयसकरं महत्।
तद्भिन्ने तु कृतं तद्धि बन्ध्नातीति त्यजेद्बुधः।।

## भगवत्-प्रेम से मुक्ति

(१)

सांसारिक प्रेम पर आश्रित सारे सम्बन्ध महान् कष्ट देते हैं। ऐसे सम्बन्धी के वियोग में हृदय में शोक की कीलें गहरे गाड़ उठती हैं।

परमेश्वर से किया गया परम प्रेम महत् कल्याणकारी होता है। उससे भिन्न किसी से किया गया वही बन्धनकारी होता है। अतः बुद्धिमान् पुरुष को चाहिये कि वह ऐसी प्रीति का त्याग करके परमेश्वर से ही प्रीति करे।

स्वजनवियोगजदुःखं, स्मरन्न कुर्यात् स्नेहं प्रिये जने।
वर्तिः स्नेहकारणात् ज्वलति सदैवार्द्रदेहापि।।

स्वजनवियोगजदुःखं, स्मृत्वा जागतिकेऽभीष्टवस्तुनि।
धृत्या त्यक्त्वासक्तिं, परमात्मन्येव तां कुर्यात्।।

कुर्वन् परं प्रेम तदर्पितात्मा
सदा च सर्वेषु जनेषु सख्यम्।
परं पुमांसं लभते मनीषी
नान्योऽस्ति पन्थास्तदवाप्तयेऽतः।।

स्वजनों के वियोग से उत्पन्न दुःख का स्मरण करते हुये, प्रिय जन से कभी भी स्नेह का नाता नहीं जोड़ना चाहिये। स्नेह (प्रेम, तेल) में सदैव डूबी रहने के कारण ही, स्नेह (तेल) से सदैव आर्द्र अर्थात् भीगी रहने पर भी बाती जलती रहती है।

स्व-जनों के वियोग से उत्पन्न दुःख का स्मरण करते हुये लौकिक, पदार्थों के प्रति आसक्ति (मोह) का धैर्यपूर्वक त्याग कर देना चाहिये। यह आसक्ति परमात्मा में ही करने योग्य है।

उस परमेश्वर के प्रति समर्पित मन से उससे अविचल-अव्यभिचारिणी प्रीति करता हुआ, एवं उससे अभिन्न समस्त प्राणियों से भी प्रीति (प्रेम) करता हुआ विवेकी-बुद्धिमान् मनुष्य ही उस परम पुरुष को प्राप्त करता है। उसकी प्राप्ति का इससे भिन्न कोई मार्ग नहीं है।

(२)

तत्प्राप्तयेऽतः प्रयतेत नित्यं
कुर्वन् परं प्रेम तदर्पितात्मा।
एवं वियोगो न ततः कथञ्चित्
[1]सम्बन्धतस्तस्य सुखानुभूतिः॥

रहस्यमेतत् खलु जीवनस्य
विभावितं सर्वजनैः सदा स्यात्।
मनुष्ययोनौ जननं तदीयं
भवत्यमोघं परमात्मयोगात्॥

(२)

अतः उसमें मन को अर्पित-स्थापित करके उसकी प्रेम-भक्ति के द्वारा उसकी प्राप्ति के लिये नित्य प्रयत्नशील होना चाहिये। इस प्रकार उसके साथ 'सम्बन्ध अर्थात् मन का सम्यक् स्थिर बन्धन हो जाने से उससे किसी तरह से वियोग नहीं हांगा, एवं उसके आनन्द-स्वरूप होने से नित्य सुख की अनुभूति होती रहेगी।

मानव जीवन के गूढ़ रहस्य को सभी को स्पष्ट जान लेना चाहिये कि मनुष्य-योनि में हुआ उसका जन्म परमात्मा के साथ योग अर्थात् सम्बन्ध स्थापित हो जाने पर ही अमोघ अर्थात् सार्थक होता है, सफल होता है।

१. सम्यग् बन्धो (मनसः) सम्बन्धः, प्रगाढो मनोभाव इत्यर्थः (द्रष्टव्य भाग० XI।१।२८- केवलेन हि भावेन गोप्यो गावो नगा मृगाः।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा॥

प्राप्यं समस्तं प्रियमप्रियं वा
वस्तु त्ववश्यं भजते पृथक्त्वम्।
किन्त्वात्मरूपेण हृदि स्थितो यः
प्रभुः, पृथक्त्वं स कथं भजेत।।

युगरसवियन्नेत्रे वैक्रमाब्दे शुभे पुनः।
अक्षयाख्यतृतीयायामियमाद्याचतुश्शती।।
गता पूर्तिं कृपालोर्हिं प्रभोर्यस्यानुकम्पया।
तस्मै निवेद्यते श्रद्धापूर्वकं प्रीयतां ह्यसौ।।

।।इत्याद्या-चतुश्शतीति कृतिः सम्पूर्णा।।

मनुष्य को देर-सबेर प्राप्त होने वाली प्रिय या अप्रिय, कोई भी वस्तु अन्ततः उससे पृथक् या वियुक्त हो ही जाती है। किन्तु ['सर्वस्य चाहं हृदि संनिविष्टः' (गीता १५।१५), 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति' (गीता १८।६१) इत्यादि वचनानुसार] जो ईश्वर आत्मरूप से सभी के हृदय में स्थित है, वह उससे पृथक् कैसे हो सकता है?

शुभ वैक्रत संवत् २०६४ की अक्षयतृतिया को यह कृति आद्या-चतुश्शती जिन कृपालु प्रभु की अनुकम्पा से पूर्णता को प्राप्त हुई, उन्हें श्रद्धापूर्वक समर्पित है। इससे प्रभु प्रसन्न हों।



।। 'आद्या-चतुश्शती' कृति सम्पूर्ण।।

